

# राष्ट्रिय संस्कृत संस्थानम् नवदेहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

॥ १६ ॥

हरिकविविरचिता

# सुभाषितहारावली

सम्पादकः

डॉ० जगन्नाथ पाठकः



**Rashtriya Sanskrit Sansthan**

*( Under the auspices of the Ministry of Education and Culture, Govt. of India )*

**Delhi**

●

**Ganganatha Jha**
**Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**

●

*General Editor*
**Dr. G. C. Tripathi**

●

No. 19

# SUBHĀṢITAHĀRĀVALĪ

*of*

**Hari Kavi**

*Edited by*

Dr. Jagannatha Pathak




ALLAHABAD

1984

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )
दिल्ली

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला
प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—•—

एकोनविंशं प्रसूनम्

# सुभाषितहारावली

## हरिकविविरचिता

—•—

संपादकः
डॉ० जगन्नाथ पाठक

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयागः–२
१९८४

हरिकविविरचिता

# सुभाषितहारावली

•

सम्पादकः

डॉ० जगन्नाथ पाठकः




गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयाग-२

१९८४

## FOREWORD

We are pleased to place in the hands of the lovers of Sanskrit literature the *Subhāṣitahārāvalī* by Poet Hari *alias* Bhānu Bhaṭṭa. The Subhāṣitahārāvalī is a unique anthology of choice Sanskrit verses composed by a number of known and unknown poets. It was compiled by Hari Kavi who was originally an inhabitant of Surat in Gujarat but who served in the court of Shambhājī, the illustrious son of Shivājī. The date of the composition of the work, therefore, falls somewhere towards the end of 17th century. Besides the present work, Hari Kavi has authored two more Kāvyas, viz. *Śambhurājā-Caritam,* in which he describes the exploits of his patron, and *Haihayendra-Caritam* which he himself has commented upon. With the publication of the Subhāṣitahārāvalī the other two works now remain to be brought out so that the poetic talent of Hari Kavi may be brought to light and his works be studied in their entirety.

The credit for discovering the manuscripts of all these works goes to Prof. G. Buehler who had procured their badly preserved and defectives manuscripts from Surat. These manuscripts are presently deposited in the Bhandarkar Oriental Research Institute, Poona. We are extremely grateful to the authorities of the B. O. R. I. which not only readily agreed to our request for the publication of Subhāṣitahārāvalī but also immediately sent its manuscript on loan to this Vidyapeetha. Since no other manuscript of Subhāṣitahārāvalī is known to exist and the Poona manuscript is incomplete and defective in many ways, the text of Subhāṣitahārāvalī could not be re-constructed properly. We are painfully conscious of our shortcomings yet we have the satisfaction of bringing a hitherto unpublished work to light and salvaging it from oblivion. My special thanks are due to Dr. Jagannatha Pathak, Reader in Sāhitya

at this Vidyapeetha who undertook the arduous task of editing this difficult work and, inspite of unsatisfactory source-material, has been able to present the work of Hārāvalī in a more or less acceptable form. This is his second attempt at editing a Subhāṣita work, the first one being the *Padyaracanā* by Lakṣmaṇa Bhaṭṭa. He has done his job exceedingly well.

If we get an encouraging response from the lovers of Sanskirt poetry, we also have the plans to publish the *Prasanna-Sāhitya-ratnākara*, a still older and rare anthology of Sanskrit *Subhāṣitas*, the only manuscript of which is preserved in our Manuscript Library.

ALLAHABAD
September 15th, 1984

G. C. Tripathi
*PRINCIPAL*

# सम्पादकीयम्

विद्यापीठादस्मादिदम्प्रथमतया प्रकाश्यमानः सुभाषितहारावलीनामा 'भानुभट्ट'त्यपराख्यहरिकविविरचितः सुभाषितसङ्ग्रहग्रन्थोऽयं पुणेस्थित-भाण्डारकरप्राच्यशोधसंस्थानात् पाण्डुलिपिरूपेणोपलब्धः[1] । केवलमेकैव पाण्डु-लिपिः, साऽपि मध्ये मध्ये खण्डिता व्याकीर्णा च, तत उपलब्धा । सुभाषित-ग्रन्थस्यास्य 'सुभाषितविश्वकोष'रूपतां परिकल्प्य कवेश्च परिश्रमं सफलता-मानेतुं ग्रन्थस्यास्य सम्पादनमतिदुष्करमप्यङ्गीकृतम् । यद्यपि सुभाषितरत्नभाण्डा-गारादिसुभाषितसङ्ग्रहाणामुपयोगेन यथाकथञ्चित्सम्पादनं पूर्णतामापद्यत, तथापि यत्र तत्र लिपिकारस्य स्खलितैः सम्यक्पठनाशक्यत्वादपि कश्चनासन्तोषो मनसि वर्तत एव ।

सुभाषितहारावल्या रचयिता हरिकविः ख्रिस्तीयसप्तदशशताब्द्या मध्ये भारतभुवमलञ्चकार । स हि महाराष्ट्रवीरशिवाजीमहोदयसुतस्य सम्भाजी-महोदयसुतस्य सभाकविरासीत् । वंशक्रमेण दाक्षिणात्यः स गुजरातराज्ये सूरतनगरस्य वास्तव्य आसीत् । अस्य कृतित्रयमुपलब्धं वर्तते—शम्भुराजचरितम्, सव्याख्यं हैहयेन्द्रचरितं सुभाषितहारावली चेति । एतत्सर्वमपि व्याकीर्णं खण्डितञ्च श्रीब्यूलरमहाशयैः सूरतनगरादुपलब्धम् । सर्वस्यास्य सामग्रीजातस्याकलनं कृत्वा पी० के० गोडेमहाशयैर्निबन्ध एको लिखितः[2] । डॉ० हरदत्तशर्मभिरपि सुभाषित-हारावल्याश्रित एको निबन्धो लिखितः[3] ।

---

1. No. 92 A of 1883-84; Extent : foll 158, Lines 10, Letters 34.
2. Harikavi alias Bhanubhatta a court-poet of King Sambhaji and his works : Annals B. O. R. I. Vol. XVI, 1934-35 Pp. 262-291.
3. Indian Hist. Quarterly Vol, X. No. 3. Pp. 478-485.

हरिकवेः शम्भुराजचरितस्य प्राप्तांशात् गोडेमहाशयैस्तदीयवंशादि-विषये विचारः कृतः, स एव तदुद्धृतोंऽशोऽस्माभिः प्रस्तूयते—

कर्तुं कान्तकवित्वकोटिरचना यद्यस्ति वः कौतुकं
तत्सन्तः पिबतामलानि मधुना सिक्तानि सूक्तानि नः ॥१६१॥

मया मन्देनेह त्रिभुवनमनोहारिचरिता(तां ?)
कृता(तां?) वाचां गुम्फां गणविहितरूपां कृतधियः।
तदेतज्जानीध्वं यदयमुपजीव्यामरतरो-
र्गिरां गन्धं प्राप्तः कविसुरभितां शङ्करगुरोः ॥१६२॥

येनैकः कवितावतारसमये ग्रन्थः समुल्लासित-
स्तस्या एव सुविश्रमे पुनरहो बन्धः परो निर्मितः।
तस्या लास्यविधौ कृतास्तु बहवस्ते ते प्रबन्धोत्तमाः
सोऽयं कोऽपि हरि(रिः) कविः कविरविज्योतिःकणो दीव्यति ॥१६३॥

श्रीनारायणनामसद्यतिवरप्रौढप्रसादोदयाद्
य[ः]प्रापाखिलदुर्लभां निजकुले कारुण्यकल्लोलिनीम्।
श्रीकान्तस्य ययामलेह्यकुरुतां तस्मिन् विलासं निजं
वैरं रूढमहो विहाय सततं वाग्वादिनी सम्पदौ ॥१६४॥

यश्च श्रीपतिमन्त्रचिन्तनसमुल्लासोल्लसो(सौ)भगं
सौन्दर्यं परमापतत्त्रिभुवनप्रक्षोभणप्रोद्धुरम्।
तं सम्पत्तिभरं वरन्तयमलं वाचां विलासं तथा
यैर्विश्रान्तिकरोऽभवत्त्रिजगतां कामाच्युतब्रह्मणम् ॥१६५॥

सोऽयं भूरिगुणो निकाममहिमा सौजन्यवारान्निधिः
श्रीचिन्तामणिनामको द्विजपतिश्चातुर्यचिन्तामणिः।
सूरिं सुनुमसूत तं श्रुतिधरं साक्षात्प्रसादोदयं
श्रीकान्तीयमिव प्रकामविभवं श्रीरङ्गनाथाभिधम् ॥१६७॥

नानाशास्त्रविचारचारुधिषणो विश्वोपकारव्रतः
श्रीगोविन्दपदारविन्दसुरसासक्तान्तरेन्दिदिरः ।
यः श्रीभागवतामृताब्धिविलसत्कल्लोलसेकैः सदा
संसाराग्निदावदग्धमखिलं लोकं समाजीवयत् ॥१६७॥

तस्मादाविरभूत्त्रिलोकविदितो नारायणः किं स्वयं
श्रीनारायणनामको गुरुवरः श्रीपद्मनाभानुजः ।
यस्मिन्नासत ते गुणाः स्थितिजुषः सर्वेऽनुकम्पादयः
स्वीयं वैरमहो विहाय सततं सौजन्यलुब्धा इव ॥१६८॥

पतङ्गतनुजालसन्मिहिरपत्तनाध्यासनः
समस्तगुणगुम्फितो विबुधचक्रचूडामणिः ।
रमेशपदपङ्कजप्रमदमानसेन्दिन्दिरः
परास्तकुहकान्तरप्रगुणदाक्षिणात्यान्वयः ॥१६९॥

श्रुतिस्मृतिपुराणजाखिलसुधर्मसंवर्द्धनः
समुद्रवसनोल्लदिष(द्विश)दकीर्तिचन्द्रोदयः ।
विलोकनविदारितप्रचितलोकपापोदयः
सुधर्म इव मूर्तिमान् विजयते स नारायणः ॥१७०॥

सत्कीर्तिकल्पलतिका दलिताङ्कुरासीद्
विज्ञानकल्पतरुरप्यखिलो विशीर्णः ।
सौजन्यसिन्धुरपि शुष्कसुधारसोऽभू-
न्नारायणेऽखिलगुरौ स्वतनुं प्रविष्टे ॥१७१॥

तस्मात्साधुपदाब्जसेवनपरः सोऽयं हरिश्चाभव-
च्छ्रीनारायणपादपङ्कजसुधासेवाप्रवाग्वैभवः ।
यः श्रीशम्भुमहीपतेरपि गुरोस्तस्यैव कृष्णाख्यया
विख्यातस्य निदेशतो वरमिदं काव्यं व्यधादद्भुतम् ॥१७६॥

शम्भुः काव्यमिदं महत्कृतवतः स्वीयाज्ञया श्रीहरे-
श्चेतोभीष्टमलं ददौ तदखिलं येनायमानन्दवान् ।
[सम्पू ?]र्णं सकलं स्वकीयममलः पुत्रप्रपौत्रैः समं
यावज्जीवमहो स्वजीवनकृते नान्यं वदान्यं गतः ॥१७३॥

विकाशं सन्नीते विबुधरविभिः काव्यकमले
मदीयेऽस्मिन् स्फूर्जद्विविधगुणसौरभ्यनिवहे ।
रसाली सम्पूर्णे कमलनिलया सातिदयया
सरासं संवासं रचयतु जगन्मोहनकरी ॥१४७॥

आचन्द्रार्कं समुद्यन्नवरसललितां द्योतिसन्दर्भसारां
नानालङ्कारपूर्णां निचितगुणगणां भूरिभावार्थगर्भाम् ।
राजद्वैदग्ध्यमुग्धां मुररिपुगृहिणीमुल्लसन्तीमिवान्तः
कामासूयाविमुक्ता मम भणतिमहो साधवो भावयन्तु ॥१७५॥

दुःसङ्गोऽस्तु कदापिना(नो)त्रिभुवने कस्यापि सस्यान्विता(ता)
भूमिः सन्ततमस्तु वस्तुनि परे निष्ठां व्रजेयुर्जनाः ।
नीचा नित्यमिह त्यजन्तु सुहृदां वैरं न वैरङ्कुरै-
र्भाग्यानां क्षितिनायकः क्षितितले शम्भुश्चिरं नन्दतु ॥१७६॥

श्रीचिन्तामणिसूरिसूनुविबुधश्रीरङ्गनाथोद्भव-
श्रीनारायणसम्भवो हरिकविर्यः श्रीशपादाश्रयः ।
सर्गोऽभूदनवद्यपद्यरचनाचातुर्यविद्योतिते
तत्काव्ये खलु शम्भुराजचरिते काव्यान्तिमो द्वादशः ॥१७७॥

पीयूशां(षां)शु १ समुद्र ४ सप्त ७ वसुधा १ विद्योतिते वैक्रमे
वर्षे मासि च पौषनाम्नि बहुले पक्षे द्वितीयादिने ।
सद्वारे द्विजनायकस्य पितृभे चापूर्णयच्छ्रीहरिः
काव्यं शोभनशम्भुराजचरितं नानागुणोज्जृम्भितम् ॥१७८॥

**इति सूर्यपुरस्थिते नारायणसूरिसूनुहरिकविविरचिते विजयाङ्के शम्भुराजचरिताख्ये महाकाव्ये राजनीतितत्त्वोपदेशनिर्णयो नाम द्वादशः सर्गः सम्पूर्णः ॥श्री॥ सम्पूर्णं चैतत् काव्यम् ॥श्री**

एतदाश्रित्य, चिन्तामणिः, तत्पुत्रो रङ्गनाथः, तत्पुत्रो नारायणः, तत्पुत्रश्च हरिकविः इति वंशानुक्रमः सिद्ध्यति। हरिकवेः पिता मूलतो दाक्षिणात्यो ब्राह्मणः (दाक्षिणात्यान्वयः) आसीत्, किन्तु प्रवर्तमानं गुजरातराज्ये सूरतनाम नगरमध्यवात्सीत्। सूरतनगरमेव मिहिरपत्तनं सूर्यपुरमित्यभिहितम्। हरिकवेः एकः चक्रपाणिनामाऽनुज आसीत्। तस्य पद्यानि 'इदमस्मदनुजचक्रपाणिकवेः' इति निर्देशपूर्वं सुभाषितहारावल्यां हरिकविनोद्धृतानि। शम्भुराजस्य कश्चन कृष्णाख्यो गुरुरासीत्, यस्य निदेशतो हरिकविना शम्भुराजचरितमहाकाव्यं निरमायि। कतिपयानि पद्यानि 'श्रीकृष्णपण्डितानाम्' इति निर्देशपुरस्सरं हारावल्यामुद्धृतानि, तानि तेषामेव गुरुकृष्णपण्डितानामिति शक्यतेऽनुमातुम्।

शम्भुराजचरितस्य निर्माणकाल उपरिनिर्देशानुसारं वि० सं० १७४१ (तदनुसारं ख्रि० १६८५) वर्तते, किन्तु सुभाषितहारावल्या निर्माणसमय इतः पूर्वं वा पश्चाद् वेति वक्तुं न शक्यम्।

श्री पी० के० गोडे महोदयैः स्वकीये निबन्धे शम्भुराजचरितस्य व्याकीर्णस्य एकस्मिन् पत्रांशे हरिकवेः कतिपयपद्यानामुल्लेखेन प्रतीयते यदस्य शङ्कर इति कश्चिदग्रजोऽप्यासीत्। तत्रैवोद्धृते एकस्मिन्नन्ये पद्ये अनुजस्य चक्रपाणेः कवितां प्रशंसता तेन लिखितम्—

**कान्तेव मञ्जुलपदा कमनीयवर्णा**
**सश्लेषपूर्वकमपूर्वतरं वदन्ती।**
**न स्यात् कथं नु सरसा सकला सभावा**
**श्रीचक्रपाणिकविताऽभिमता बुधानाम्॥**

डॉ० हरदत्तशर्माणः हरिकवेः सुभाषितहारावलीमाश्रित्य लिखिते स्वकीये निबन्धे 'श्रीनारायणगुरुचरणानाम्' इति निर्देशपुरस्सरमुद्धृतैः पद्यैर्नारायणं हरिकवेः गुरुरिति मन्वते। शम्भुचरितकाव्यस्य सुभाषितहारावल्याश्च कविरेक-एवेति हरिकवेः 'येनैकः कवितावतारसमये' (३२८) इत्यादिना उभयत्र प्राप्तेन

शम्भुः काव्यमिदं महत्कृतवतः स्वीयाज्ञया श्रीहरे-
श्चेतोभीष्टमलं ददौ तदखिलं येनायमानन्दवान् ।
[सम्पू ?]र्णं सकलं स्वकीयममलः पुत्रप्रपौत्रैः समं
यावज्जीवमहो स्वजीवनकृते नान्यं वदान्यं गतः ॥१७३॥

विकाशं सन्नीते विबुधरविभिः काव्यकमले
मदीयेऽस्मिन् स्फूर्जद्विविधगुणसौरभ्यनिवहे ।
रसाली सम्पूर्णं कमलनिलया सातिदयया
सरासं संवासं रचयतु जगन्मोहनकरी ॥१४७॥

आचन्द्रार्कं समुद्यन्नवरसललितां द्योतिसन्दर्भसारां
नानालङ्कारपूर्णां निचितगुणगणां भूरिभावार्थगर्भाम् ।
राजद्वैदग्ध्यमुग्धां मुररिपुगृहिणीमुल्लसन्तीमिवान्तः
कामासूयाविमुक्ता मम भणितिमहो साधवो भावयन्तु ॥१७५॥

दुःसङ्गोऽस्तु कदापिना(नो)त्रिभुवने कस्यापि सस्यान्वितां(ता)
भूमिः सन्ततमस्तु वस्तुनि परे निष्ठां व्रजेयुर्जनाः ।
नीचा नित्यमिह त्यजन्तु सुहृदां वैरं न वैरंकुरै-
र्भाग्यानां क्षितिनायकः क्षितितले शम्भुश्चिरं नन्दतु ॥१७६॥

श्रीचिन्तामणिसूरिसूनुविबुधश्रीरङ्गनाथोद्भव-
श्रीनारायणसम्भवो हरिकविर्यः श्रीशपादाश्रयः ।
सर्गोऽभूदनवद्यपद्यरचनाचातुर्यविद्योतिते
तत्काव्ये खलु शम्भुराजचरिते काव्यान्तिमो दादशः ॥१७७॥

पीयूशां(षां)शु १ समुद्र ४ सप्त ७ वसुधा १ विद्योतिते वैक्रमे
वर्षे मासि च पौषनाम्नि वहुले पक्षे द्वितीयादिने ।
सद्वारे द्विजनायकस्य पितृभे चापूर्णयच्छ्रीहरिः
काव्यं शोभनशम्भुराजचरितं नानागुणोज्जृम्भितम् ॥१७८॥

**इति सूर्यपुरस्थिते नारायणसूरिसूनुहरिकविविरचिते विजयाङ्के शम्भुराजचरिताख्ये महाकाव्ये राजनीतितत्त्वोपदेशनिर्णयो नाम द्वादशः सर्गः सम्पूर्णः ॥श्री॥ सम्पूर्णं चैतत् काव्यम् ॥श्री**

एतदाश्रित्य, चिन्तामणिः, तत्पुत्रो रङ्गनाथः, तत्पुत्रो नारायणः, तत्पुत्रश्च हरिकविः इति वंशानुक्रमः सिद्ध्यति। हरिकवेः पिता मूलतो दाक्षिणात्यो ब्राह्मणः (दाक्षिणात्यान्वयः) आसीत्, किन्तु प्रवर्तमानं गुजरातराज्ये सूरतनाम नगरमध्यवात्सीत्। सूरतनगरमेव मिहिरपत्तनं सूर्यपुरमित्यभिहितम्। हरिकवेः एकः चक्रपाणिनामाऽनुज आसीत्। तस्य पद्यानि 'इदमस्मदनुजचक्रपाणिकवेः' इति निर्देशपूर्वं सुभाषितहारावल्यां हरिकविनोद्धृतानि। शम्भुराजस्य कश्चन कृष्णाख्यो गुरुरासीत्, यस्य निदेशतो हरिकविना शम्भुराजचरितमहाकाव्यं निरमायि। कतिपयानि पद्यानि 'श्रीकृष्णपण्डितानाम्' इति निर्देशपुरस्सरं हारावल्यामुद्धृतानि, तानि तेषामेव गुरुकृष्णपण्डितानामिति शक्यतेऽनुमातुम्।

शम्भुराजचरितस्य निर्माणकाल उपरिनिर्देशानुसारं वि० सं० १७४१ (तदनुसारं ख्रि० १६८५) वर्तते, किन्तु सुभाषितहारावल्या निर्माणसमय इतः पूर्वं वा पश्चाद् वेति वक्तुं न शक्यम्।

श्री पी० के० गोडे महोदयैः स्वकीये निबन्धे शम्भुराजचरितस्य व्याकीर्णस्य एकस्मिन् पत्रांशे हरिकवेः कतिपयपद्यानामुल्लेखेन प्रतीयते यदस्य शङ्कर इति कश्चिदग्रजोऽप्यासीत्। तत्रैवोद्धृते एकस्मिन्नन्ये पद्ये अनुजस्य चक्रपाणेः कवितां प्रशंसता तेन लिखितम्—

**कान्तेव मञ्जुलपदा कमनीयवर्णा**
**सश्लेषपूर्वकमपूर्वतरं वदन्ती।**
**न स्यात् कथं नु सरसा सकला सभावा**
**श्रीचक्रपाणिकविताऽभिमता बुधानाम् ॥**

डॉ० हरदत्तशर्माणः हरिकवेः सुभाषितहारावलीमाश्रित्य लिखिते स्वकीये निबन्धे 'श्रीनारायणगुरुचरणानाम्' इति निर्देशपुरस्सरमुद्धृतैः पद्यैर्नारायणं हरिकवेः गुरुरिति मन्वते। शम्भुचरितकाव्यस्य सुभाषितहारावल्याश्च कविरेक-एवेति हरिकवेः 'येनैकः कवितावतारसमये' (३२८) इत्यादिना उभयत्र प्राप्तेन

पद्येन प्रमाणितं भवति । अस्य पद्यस्योद्धरणं हरिकविना शम्भुराजचरितमहाकाव्यात्सुभाषितहारावल्यां कृतमिति सम्भावयता डॉ० पी० के० गोडेमहाशयेन शम्भुचरितानन्तरं सुभाषितहारावल्या निर्माणकालः स्वयमेव निर्दिष्टः ।

सुभाषितहारावल्यां नामग्रहणपूर्वकं निर्दिष्टेषु कतिपयेषु कविषु बहुवचनस्य प्रयोगमवलोकयतां डॉ० हरदत्तशर्ममहोदयानां मतमिदं यत्कवयोऽमी हरिकवेः समसामयिका वा किञ्चित्पूर्वकालभाविनो वेति । हरिकविना त एवं निर्दिष्टाः —

—रामजित्पण्डितानाम्, लक्ष्मीधरपादानाम्, माधवपुरीपादानाम्, महीश्वरपुरीपादानाम्, मधुसूदनसरस्वतीनाम्, अनन्तदेवानाम्, श्रीकृष्णपण्डितानाम्, श्रीराघवचैतन्यानाम्, श्रीबोपदेवपण्डितानाम्, गोपीनाथपण्डितानाम्, सोमजिद्भट्टानाम् ।

गोडेमहाशयैः विस्तरेण शम्भुराजस्य सम्भाजीमहोदयस्य चैक्यं स्वनिबन्धे संसाधितम् ।

हरिकवेः तृतीया कृतिः सव्याख्यं हैहयेन्द्रचरितमहाकाव्यमिति निर्दिष्टा श्रीगोडेमहाशयैः । तदनुसारं तत्र पुष्पिका एवं वर्तते—

इति श्रीसूर्यपुरस्थितश्रीनारायणसूरिसूनुहरिकविविरचितायां श्रीहैहयेन्द्रचरिताख्यमहाकाव्यव्याख्यायां शम्भुविलासिकाख्यायामष्टमः सर्गः समाप्तः । श्री । श्रीरस्तु । संवत् १७७९ वर्षे फाल्गुन शुदि १ रवौ समाप्तिमगमत् ।

एतदनुसारं काव्यस्यास्य १७२३ ख्रिस्तीयाब्दे प्रतिलिपिः कृतः ।

'भानुभट्ट' इति हरिकवेरन्यन्नाम इति हैहयेन्द्रचरितमहाकाव्यस्य प्रथमसर्गस्य व्याख्यायाः पुष्पिकायां निर्दिष्टमस्ति—

इति श्रीसूर्यपुरस्थितश्रीमन्नारायणसूरिसूनुप्रसिद्धभानुभट्टापराभिधहरिकविविरचितायां स्वकृतहैहयेन्द्रचरिताख्यकाव्यव्याख्यायां श्रीशम्भुविलासिकाख्यायां प्रथमः सर्गः समाप्तः ।

## हरिकवेः कवित्वम्

शम्भुराजचरितहैहयेन्द्रचरिताख्यमहाकाव्यद्वयनिर्माणेन स्वप्रतिभानस्य वैशिष्ट्यमादधती श्रीहरिकवेर्वाणी यत्र तत्र सुभाषितहारावल्यां 'हरिकवेर्मम' इति निर्देशपुरस्सरमुद्धृता कवेर्वैदग्ध्यं प्रमाणयितुं सुतरां प्रभवति। अयं पण्डितराजेन जगन्नाथेन प्रभावित इति प्रमाणीकर्तुं पी० के० गोडेमहाशयाः तस्य हैहयेन्द्रचरितात्पद्यमुद्धरन्ति—

कमलपटलस्फारत्स्फूर्जन्मनोहरसौरभो-
न्मदमधुकरश्रेणीसि(शि)ञ्जासमुद्गतमाधुरी।
नहि सुभगतां लोके विन्दत्यनेकगुणाद्भुतां
कविवरजगन्नाथोदञ्चद्वचोरचनावलेः॥

सुभाषितहारावल्यां स्वनामनिर्देशपूर्वमुद्धृतेषु पद्येष्वपि यत्र कुत्रापि पण्डितराजस्य प्रभावः समकलयितुं शक्यते। यथाऽस्मिन् पद्ये—

इहान्ये ते विप्राः प्रतिसदनमागत्य कृपणान्
कणान् ये याचन्ते प्रतिगणितनक्षत्रतिथयः।
वयं कार्णाटीनां कुचकलशपत्राङ्कुरलता-
विलासव्यासङ्गोल्लसितमनसः केऽपि कवयः॥२६८॥

यथा पण्डितराजः स्वकवित्वख्यापने मुखरतां बिभर्ति तथैव हरिकविरित्यप्याकलनेन प्रतीतिपथमवतरति। यथा सुभाषितहारावल्याः ४०७-४०९ संख्याकानि पद्यानि। 'नैकमोजः प्रसादो वा रसभावविदः कवेः' इति माघकथनानुसारं हरिकवेर्वाणी प्रसङ्गानुसारं सुतरां सारल्यं बिभर्ति। यथा,

हरिरेव गतिर्हरिरेव गतिर्न हरेरपराऽस्ति गतिर्जगति।
इति हा परिभाव्य पदाम्बुरुहं नृहरेः स्मर रे सुचिरं रुचिरम्॥१९८॥

प्रस्तुतं संस्करणं सुभाषितसङ्ग्रहपरम्परायां यत्किञ्चिदवश्यमुपयोगि सेत्स्यतीति प्रयासोऽस्माकं कियान् सफल इत्यत्र सहृदया विद्वांसः प्रमाणम्।

त्रुटयोऽत्र पदे पदे लब्धुं शक्यन्ते। एतावताऽपि सम्पादकस्य सीमां परिभाव्य क्षमापुरस्सरं संशोधनं विधास्यन्ति सहृदया इति प्रार्थयामहे।

महनीयस्य ग्रन्थस्यास्य सम्पादनभारमस्मासु विश्वासपुरस्सरं निक्षिप्तवन्तो विद्यापीठस्य प्राचार्याः सहृदयधुरीणाः प्राच्यपौरस्त्यसाहित्यसंशोधनसमाकलनकर्मणि सततं जागरूकाः काव्यकला'छइल्लाः' डॉ० गयाचरणत्रिपाठिवर्या अस्माकं धन्यवादार्हा इति कथनं कामप्यौपचारिकतां बिभर्ति। इतः पूर्वं तैरेवायं जनः श्रीमदाङ्कोलकरलक्ष्मणभट्टानां पद्यरचनेत्याख्यः सुभाषितसङ्ग्रहः सम्पादयितुं प्राकाश्यमानेतुञ्च प्रेरितः।

पुणेस्थभाण्डारकरप्राच्यशोधसंस्थानस्याधिकारिणः प्रति वयं कृतज्ञाः, यैर्ग्रन्थस्य पाण्डुलिपिः सम्पादनार्थं प्रेषिता।

शाकुन्तलमुद्रणालयस्याधिकारिभिः श्रीउपेन्द्रत्रिपाठिभिः सततं जागरूकतया यथासमयमस्य ग्रन्थस्य मुद्रणे साहाय्यमाचरितमिति तान् प्रत्याभारभरिता वयम्।

जगन्नाथ पाठकः

●

## विषय-सूची

●●●

# सुभाषितहारावली

*तत्रादौ चित्ररसे नमस्कृतिगुच्छग्रथनम्। तत्र गणेशनतिमुक्ताफलानि—*

१ सिन्दूरारुणकान्ति कुम्भयुगलं पौरन्दरीसञ्चरत्
सौरं युग्ममिवादधानमखिलाधारं मृडानीसुतम्।
वन्दे वन्दितपादपद्ममरमर्यस्याङ्घ्रिबालातप-
ध्यानाद् याति सहस्रधा विघटिता विघ्नान्धकारावली॥

२ स्मरामो विघ्नौघानपि दलयितुं ध्वान्तनिचया-
निवोद्दामान् देवं द्युमणिमिव गौरीतनुभवम्।
यदीया प्राचीव स्फुरदरुणकान्तिः कटतटी-
धृता चेतः पद्माकरमिव विनिद्रं रचयति॥

—हरिकवेर्ममैतौ

३ उच्चैर्ब्रह्माण्डपिण्डीद्वितयसहचरं कुम्भयुग्मं दधानः
प्रेङ्खन्नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामः।
देवः शम्भोरपत्यं भुजगपतितनुस्पर्धिवर्धिष्णुहस्त-
स्त्रैलोक्याश्चर्यमूर्तिः स जयति जगतामीश्वरः कुञ्जरास्यः॥

—भेरीभाङ्कारस्य

---

१. °खण्ड° शा० प०।

४ प्रवालाद्रिप्रस्थद्युतिनिचयपर्यायवपुषे
नमो विघ्नश्रेणीविघटनपटिष्ठाय महसे ।
जगत्प्रादुर्भावस्थितिलयनिरायासरचना-
विनोदासक्ताय प्रण[त]फलसिद्धिप्रतिभुवे ॥

—महार्णवात्

*इति गणेशनतिमुक्ताफलानि ।*

***अथ विष्णुनतिमुक्ताफलानि***

५ वियत्पुच्छोत्फालोच्छ[1]लितजलगर्भे निधिरपा-
मपां नाथः पाथःपृथुल[2]लवदुःस्थो वियदभूत् ।
निधिर्भासामौर्वो[3] दिनपतिरभूदौर्वदहन-
श्चलत्काये यस्मिन् स जयति हरिर्मीनवपुषा ॥

६ नमस्कुर्मः कूर्मं नमदमरकोटीरनिकर-
प्रसर्पन्माणिक्यच्छविमिलितमाञ्जिष्ठवपुषम् ।
जरीजृम्भाडि[भ]द्युमणिरमणीयांशुलहरी-
परीरम्भस्फूर्जद्बलभिदुपलाद्रिप्रतिभटम् ॥

७ सिन्धुष्वङ्गावगाहः खुरविवरविशत्तुच्छतोयेषु नाप्तः
प्राप्ताः पातालपङ्के न लुठन[4]रुचयः पोत्रमात्रोपयोगात् ।
दंष्ट्रापिष्टेषु नाप्तः शिखरिषु च पुनः स्कन्धकण्डूविनोदो
येनोद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥

८ वपुर्दलनसम्भ्रमात्स्वनखरं प्रविष्टे रिपौ
क्व यात इति विस्मि(स्म)यात्प्रहितलोचनः सर्वतः ।
वृथेति करताडनान्निपतितं पुरो दानवं
विलोक्य[5] भुवि रेणुवज्जयति जातहासो हरिः ॥

---

१. °पुच्छाच्छोटोच्छ° शा० प०, °पुच्छातुच्छोच्छ° सु० र० भा० । २. °पृषत° शा० प० । ३ अभूद्भास्वानौर्वो शा० प० । ४. °लुठित° सु० र० भा० । ५. निरीक्ष्य सु० र० भा० ।

९ चञ्चच्चण्डनखाग्रभेदविदलद्दैत्येन्द्रवक्षःक्षर-
द्रक्ताभ्यक्तसुपाटलो[द्ध]तसटासम्भ्रान्तिभीमाननः।
तिर्यक्कण्ठकठोरघोषघटनासर्वाङ्गखर्वीभव-
द्दिङ्मातङ्गनिरीक्षितो विजयते वैकुण्ठकण्ठीरवः॥

—एते श्रीहनूमतः

१० दैत्यानामधिपे नखाङ्कुरकुटीकोणप्रविष्टात्मनि
स्फारीभूतकडार[1]केसरसटासङ्घात[2]घोराकृतेः।
सक्रोधञ्च सविस्मयञ्च सगुरुव्रीडञ्च सान्तःस्मितं
क्रीडाकेसरिणो हरेर्विजयते तत्कालमालोकितम्॥

—इन्द्रकवेः

११ अजिनदण्डकमण्डलुमेखलारुचिरपावनवामनमूर्तये।
मितजगत्त्रितयाय जितारये निगमवाक्पटवे बटवे नमः॥

—कस्यापि

१२ अधिपञ्चवटीकुटीरवर्ति स्फुटितेन्दीवरसुन्दरोरुमूर्ति।
अपि लक्ष्मणलोचनैकलक्ष्यं नमत ब्रह्म सरोरुहायताक्षम्॥

—लक्ष्मणस्य

१३ घूर्णत्पाटलनेत्रपालि विगलद्भूषामणि प्रस्खल-
न्मैरेयप्लुतसृक्कणि क्वणदलिव्यादष्टदन्तच्छदम्।
क्षौमोद्धीजनखिन्नरेवति हलव्यालम्बिदोर्वल्लरि
भ्रश्यत्कुन्तलि लोलकुण्डलि नुमस्तालाङ्कमाद्यं महः॥

१४ अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूलतं
किञ्चित्कुञ्चितकोमलाधरपुटं साचिप्रसारेक्षणम्[4]।
आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्गललितं ध्याये हरिं मो[5]हनम्॥

---

१. 'विगल' सु० र० भा०। २. 'कराल' सु० र० भा०। ३. 'सङ्घट्ट' सु० र० भा०। ४. 'प्रसारीक्षणम्' सु० र० भा०। ५ जगन्मो सु० र० भा०।

१५ चञ्चत्पीयूषधाराभरितघनघटाचिक्कणैरङ्गभङ्गै-
राभीरप्रेयसीनां मनसि जनयते मान्मथीमार्तिमुद्राम् ।
गुञ्जाहाराय कञ्जायतचपलदृशे कोटिदण्डप्रणामान्
कस्मैचित्कल्पयामो वयमिह कुहनागोदुहे दैवताय ॥

—अकबरीकालिदासस्य

१६ वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥

—श्रीजयदेवस्य गीतगोविन्दकृतः

१७ धर्माधर्मौ तद्विपाकास्त्रयोऽपि क्लेशाः पञ्च प्राणिनामायतन्ते ।
यस्मिन्नेतैर्नो परामृष्ट ईशो यस्तं वन्दे विष्णुमोङ्कारवाच्यम्[1] ॥

—विज्ञानेश्वरस्य

*इति विष्णुनतिमुक्ताफलानि*

***अथ शिवनतिमुक्ताफलानि***

१८ मौनादस्तमितैव चाटुभणितिः स्रस्तैकहस्ताद् गतं
दूरेऽप्यञ्जलिबन्धनं प्रणमनं स्तब्धार्धमूर्ध्नः कुतः ।
इत्थं सङ्कटितैकविग्रहतया व्यग्रो गिरिग्रामणी-
जायां जातरुषं जयत्यनुनयन् देवस्त्रिलोकीगुरुः ॥

---

१. "सुरता-नारकता-मनुष्यतारूपास्त्रयस्तद्विपाकाः । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः यस्मिन्नायतन्ते यदधीना भवन्ति । एतैः पूर्वोक्तैर्नो परामृष्टः नायत्तीकृतो यस्तमिति संक्षेपतोऽर्थः ।" इति टिप्पण्यां लिखति ।

१६ चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभासुरो
लीलादग्धविलोलकामशलभः श्रेयो दशाग्रे स्फुरन् ।
अन्तर्व्यूढदुरन्तमोहतिमिरप्राग्भारमुच्छेदयं-
श्चेतःसद्मनि योगिनां विजयते[1] ज्ञानप्रदीपो हरः ॥

—इन्द्रकवेरेतौ

२० गुणातीतोऽपीशस्त्रिगुणसचिवस्त्र्यक्षरमय-
स्त्रिमूर्तिर्यः सर्गस्थितिविलयकर्माणि कुरुते ।
कृपापारावारः परमगतिरेकस्त्रिजगतां
नमस्तस्मै कस्मैचिदमितमहिम्ने पुरभिदे ॥

—गङ्गेश्वरोपाध्यायस्य

२१ भूषापेटी भुवनमधरं पुष्करं पुष्पवाटी
शाटीपालाः शतमखमुखा मन्मथश्चागुरु··(?) ।
व्यासप्र(प्रे)ष्ठा भुवनविदिता यस्य वाहाधिवाहा
वन्दे देवं जलधिशरधिं देवतासार्वभौमम्[2] ॥

—सार्वभौमस्य

२२ सुत्रामादिसुरालिमौलिविलसन्माणिक्यमालामिल-
न्मुक्तासक्तमहेन्द्रनीलविगलत्कान्तिप्रकाण्डैरिव ।
बन्धूकावलिशोणशोणचरणं कर्पूरपूरामलं
कालाकारकरालकण्ठममराधीशं तमीशं नुमः ॥

—हरिकवेर्ममायम्

---

१. "यः सदा विलसतामिति पाठ" इति टि० निर्दिशति ।

२. "पायाज्जलधिशरधिर्देवतासार्वभौमः" इति टिप्पण्या संशोधनं प्रस्तौति ।

२३ ईसारोसप्पसादप्पणदिसु बहुसो सग्गगङ्गाजलेहिं
आमूलं पूरिदा ये तुहिनकरकलारुप्पसुप्पीअ रुद्दो ।
जुह्ना मुक्काहलिल्लं णतमउलिणिहत्तग्गहच्छेहि दोहिं
अर्द्धं सिग्धं व्व दिंदो जयदि गिरिसुदापाअपंकेरुहाणं[1] ॥

—श्रीराजशेखरस्य

२४ यस्मिन् बुद्बुदसङ्करा इव मुहुर्[2]ब्रह्माण्डपिण्डाः क्वचिद्
भान्ति क्वापि च सीकरा इव विरिञ्च्याद्याः स्फुरन्ति स्फुटम्[3] ।
चिद्रूपा लहरीव विश्वजननी शक्तिः क्वचिद् द्योतते
स्वानन्दामृतनिर्भरं शिवमहापाथोनिधिं तं नुमः ॥

—शार्ङ्गधरस्य

२५ ॐकारो यस्य कन्दः सलिलमुपनिषन्न्यायजालं मृणालं
ब्रह्माण्डं यस्य काण्डं प्रसरति परितो यस्य रागः प्रयागः ।
भृङ्गध्वानं पुराणं विजनसुरधुनीतीरवासोऽधिवासो
यस्यानन्दो मरन्दः पुरहरचरणाम्भोरुहं तद् भजामः ॥

—भानुकरस्य

२६ उच्चैरुत्तालखेलद्भुजवनपवनोद्धूतशैलौघपात-
स्फारोदञ्चत्पयोधिप्रकटितमुकुटस्वर्धुनीसङ्गमानि ।
जीयासुस्त ण्डवानि स्फुटविकटजटाकोटिसंघट्टभूरि-
भ्रश्यन्नक्षत्रचक्रव्यवहित[4]सुमनोवृष्टिपातानि शम्भोः ॥

—भेरीभाङ्कारस्य

---

१. ईर्ष्यारोषप्रसादप्रणतिषु बहुशः स्वर्गगङ्गाजले-
रामूलं पूरितया तुहिनकरकलारुप्यशुक्त्या रुद्रः ।
ज्योत्स्नामुक्ताफलैर्नतमौलिनिहिताभ्यामग्रहस्ताभ्यां द्वाभ्यां
अर्घं शीघ्रं ददत् जयति गिरिसुतापादपङ्करुहयोः ॥

२. बहुब्र° शा० प० । ३. भ्रमात् शा० प० । ४. °व्यवसित° शा० प० ।

२७ नमस्तस्मै देवासुरमुकुटमाणिक्यकिरण-
प्रणालीसम्भेदस्नपितचरणाय स्मरजिते ।
महाकल्पस्वाहीकृतभुवनचक्रेऽपि नयने
निरोद्धुं भूयस्तत्प्रसवमिव कामं हुतवहे ॥

२८ श्रीकण्ठस्य कपर्दबन्धनपरिक्लान्तोरगग्रामणी-
संदष्टां मुकुटावतंसकलिकां वन्दे कलामैन्दवीम् ।
या बिम्बप्रतिपूरणाय विधिना निष्पीड्य सन्दंशिका-
यन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥

—मुरारेरेतौ

*इति शिवनतिमुक्ताफलानि*

*अथ प्रकीर्णकमुक्ताफलानि*

२९ प्रवालाद्रि.....द्युतिनिचयपर्यायवपुषे
नमो विघ्नश्रेणीविघटनपटिष्ठाय महसे ।
जगत्प्रदुर्भावस्थितिलयनिरायासरचना-
विनोदासक्ताय प्रणतफलसिद्धिप्रतिभुवे ॥

—महार्णवात्

३० करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी ॥

—सुबन्धोः

३१ सितासिते यत्र तरङ्गचामरे नद्यौ विभाते मुनिभानुकन्यके ।
लीलातपत्रं वट एव साक्षात् स तीर्थराजो जयति प्रयाणः ॥

---

१. °श्रान्तो° सु० र० भा० ।

३२ यस्यामधोमज्जनमूर्ध्वगत्यै
यत्पङ्कलेपो विमलत्वसिद्ध्यै ।
यद्वारि संसारतरोः प्रशान्त्यै
नमोऽस्तु तस्यै मणिकर्णिकायै ॥

—कस्यापि

*[इति प्र] कीर्णकमुक्ताफलानि*

*अथ सर्वदेवाशीर्मुक्ताफलानि*

३३ तं सूर्यं महयामि यत्समुदये त्रलोक्यमालोकते
नैद्रं मुद्रणमुद्विहाय निखिलं निर्माति कर्मापि च ।
यो ब्रह्माच्युतरुद्रवन्दितपदो विश्वैकचक्षुर्जग-
त्सृष्टिस्थित्युपसंहृतिप्रग(क)टनप्रोद्दामधामा विभुः ॥

३४ चन्द्रं सान्द्रं रोचिषा निर्मिमीते
यान्त्या कान्त्या स्वीयया धाम सिन्धुः ।
यो निःशङ्कं सर्वलोकं विधत्ते
तं विश्वेशं भास्करं भावयामि ॥

३५ गङ्गाभङ्गविराजमानवसना कर्पूरकुन्दप्रभा
फुल्लत्करवदामकामलीलता राजन्मरालस्थिता ।
नासामौक्तिकमण्डिता समुदयत्सौदामिनीसञ्चिता
चन्द्रालीव विभाति तां भगवतीं सम्भावये भारतीम् ॥

३६ ध्यायेऽहं सुलसत्सुधाब्धिललिताकारं मरा[ला]वली-
हारं दर्पणदर्पसागरतिरस्कारं पुरस्तान्मुहुः ।
द्राक्षेक्षुद्रवदुग्धमाक्षिककृतन्यक्कारमुद्योतव-
न्नीराकारमनेकसंख्यसकलब्रह्माण्डसारं महः ॥

—हरिकवेर्ममैते

३७ पुरा सम्यक्सेवाकरणरसिके भव्यहरहः
फलालाभान् प्राणान् कृतमनसि सन्त्यक्तुमचिरात् ।
अये रोषं वत्स त्यज भज च तोषं वृणु वरान्
जयन्त्येताः कान्ता जगति जगदम्बाभणितयः ॥

—इदमस्मदनुजचक्रपाणिकवेः

*इति नतिप्रकीर्णकमुक्ताफलानि*

*अथ सर्वदेवाशीर्मुक्ताफलानि । तत्र विष्णुः*

३८ दिश्याद् वः शफरा[1]कृतिः स भगवान्नैःश्रेयसीं सम्पदं
यस्य स्फूर्जदतुच्छपुच्छशिखरप्रेङ्खोलनक्रीडनैः ।
विश्व(ष्व)ग्वार्धिसमुच्छलज्जलभरैर्मन्दाकिनीसङ्गतै-
र्गङ्गासागरसङ्गमप्रणयिनी जाता विहायःस्थली ॥

३९ यन्निश्वाससमीरमेदुरतया दूरं समुल्लासिता
धत्ते शेषभुजङ्गभोगकलिता भूरातपत्रश्रियम् ।
स्तोत्रं यस्य चतुर्मुखी श्रुतिकवेः कुण्ठत्वमभ्यस्यति
क्रीडाकूर्मतनुर्जगन्ति स विभुः पायादपायाद्धरिः ॥

४० पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयना-
न्नि[2]द्रालोः कमठाकृतेर्भगवतः श्वा[सा]निलाः पान्तु वः ।
यत्संस्कारकलानुवर्तनवशाद् वेलाच्छलेनाम्भसां
यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥

४१ पातु त्रीणि जगन्ति सन्ततमकूपारात्समु(म)भ्युद्धरन्
धात्रीं कोलकलेवरः स भगवान् यस्यैकदंष्ट्राङ्कुरे ।
कूर्मः कन्दति नाल तिद्विरसनः पत्रन्ति दिग्दन्तिनो
मेरुः कोषति मेदिनी जलजति व्योमापि रोलम्बति ॥

---

१. शकुला° शा० प० । २. °यनैर्नि° सु० र० भा० ।

४२　अष्टौ यस्य दिशो दलानि विमलः[1] कोषः सुवर्णाचलः
कान्ताः[2] केसरजालमर्ककिरणा भृङ्गाः पयोदावली ।
नालं शेषमहोरगः प्रवितते वारांनिधेर्लीलया
तद् वः पातु समुद्धरन् कुवलयं क्रोडाकृतिः केशवः ॥

४३　बिभ्राणोऽभिनवेन्दुकोटिकुटिलं दंष्ट्राङ्कुरं लीलया
क्रोडाकारधरो हरि सः भवतां[3] भूयाद् विभूतिप्रदः ।
यत्रोत्क्षिप्तवति[4] क्षमाकमलिनीमालम्बमानः क्षणं
लोलद्वालमृणा[ल]तन्तु[5]तुलनां भेजे भुजङ्गेश्वरः ॥

४४　मुक्तैर्यास्यति कुत्रचिद् वसुमती दंष्ट्राङ्कुरस्थेयसी
कुक्षौ क्षोभमवाप्स्यति त्रिभुवनं रुद्धैरमीभिः किल[6] ।
इत्यस्वल्पविकल्पमीलितमतेः कण्ठे लुठन्तो मुहुः
कोलाकारधरस्य कैटभजितः श्वासोर्मयः[7] पान्तु वः ॥

—एते हनुमतः

४५　लीने श्रोत्रैकदेशे नभसि नयनयोस्तेजसि क्वापि याते[8]
श्वासग्रासोपभुक्ते मरुति जलनिधौ पादरन्ध्रार्द्धपीते ।
पोत्रप्रान्तैकरोमान्तरविवरगतां मृग्यतः[9] शार्ङ्गपाणेः ।
क्रोडाकारस्य पृथ्वीमकलितविभवं वैभवं वः पुनातु ॥

—वराहमिहिरस्य

४६　भूयादेष सतां हिताय भगवान् कोलावतारो हरिः
सिन्धोः क्लेष(श)मपास्य यस्य दशनप्रान्ते नटन्त्या भुवः ।
तारा हारति वारिदस्तिलकति स्वर्वाहिनी माल्यति
क्रीडादर्पणति क्षपापतिरहर्देवश्च ताटङ्कति ॥

—भानुकरस्य

---

१. विपुलः सु० र० भा० ।　२. कान्तं सु० र० भा० ।　३, भगवान् सु० र० भा० ।　४. यस्योत्क्षिप्तवतः सु० र० भा० ।　५. °नाल° सु० र० भा० ।　६. क्रमात् सु० र० भा० ।　७. श्वासानिलः सु० र० भा० ।　८. नष्टे सु० र० भा० ।　९. मार्गतः सु० र० भा० ।

४७ हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः ।
हेमाद्रिकलशा यत्र धात्री छत्रश्रियं दधौ ॥

—वादीश्वरकाञ्चनस्य

४८ चन्द्रा[1]र्धायितनिःपिधानदशनो व्योमा[2]यितान्तर्मुखो
बालार्कायितलोचनः सुरधनुर्लीलायितभ्रूलतः ।
अन्तर्नादनिरोधपीवरगलस्तवक्कूपनिर्यत्तडि-
त्तारस्फारसटावरुद्धगगनः पायान्नृसिंहः स वः ॥

४९ क्ष्वेदं गर्जितमेष किन्नु दलति स्तम्भो नृसिंहस्ततः
सोऽत्राधावति कोऽत्र भो धनुरसिहुं हेति दैत्येश्वरम् ।
जल्पन्तं निजगर्जितेन बलवत्स्तम्भाश्रिरीयावधी-
देकस्मिन् क्षण एव यो नरहरिस्त्राता स एवास्तु वः ॥

—सूक्तिसहस्रादेतौ

५० सन्ध्यारञ्जितशीतदीधितिकलासौन्दर्यभाजो नखाः
प्रीतिं पीवरयन्तु कैटभरिपोः क्रीडानृसिंहस्य वः ।
दैत्योरःस्थलपीठकुण्ठिततया दीनेन दम्भोलिना
सासूयं सकुतूहलं सविनयं साश्चर्यमालोकिताः ॥

—बालसरस्वत्याः

५१ खर्वग्रन्थिविमुक्तसन्धि विलसद्वक्षःस्फुरत्कौस्तुभं
निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसामध्वनि ।
पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं
पायाद् वः क्रमवर्द्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥

---

१. सोमा° सु० र० भा० । २. सन्ध्या° सु० र० भा० ।

५२ कस्त्वं ब्रह्मन्नपूर्वस्त्वदनुचरजनो नास्त्यनाथोऽहमेकः
किं दद्यामीप्सितं ते त्रिपदविहरणस्थानमेतत् कियत्ते ।
त्रैलोक्यं तन्न किं स्यान्मम शमनिरतस्येति संगूढभावा
विष्णोर्वाचः सुरारौ कृतकपटपदन्यासमुग्धाः पुनन्तु ॥[1]

—एतौ हनुमतः

५३ दार्घोत्तीर्णसुवर्णवर्णरमणं चण्डांशुचण्डप्रभ-
प्रौढाकारकुठारधारणपरं तज्जामदग्न्यं महः ।
हस्तध्वस्तसमस्तहस्तजकुलक्षोणीन्द्ररक्तापगा-
रोधस्तर्पिततातमात्तविजयं पायादपायाज्जगत् ॥

—हरिकवेर्ममायम्

५४ कौशल्यालसदालवालजनितः सीतालतालिङ्गितः
सिक्तः पङ्क्तिरथेन सोदरमहाशाखाभिरभ्युन्नतः ।
रक्षस्तीक्ष्णनिदाघपाटनपटुश्छायाश्रितानन्दकृत्
युष्मद्वाञ्छितसत्फलानि फलतु श्रीरामकल्पद्रुमः ॥

—कस्यापि

५५ लङ्कानाथेति शङ्काकवलितहृदये कौशिके वल्गतीत्थं
पश्येति ध्यानमुद्रां घटयति जनके सोत्सवायां सभायाम् ।
सीतायां तातनीतावतिकुतुकभृति व्याकुले बन्धुवर्गे
कोदण्डं खण्डयन् वो रघुपतिरवतात् कालिकाकामुकीनम् ॥

—चन्द्रचूडस्य

---

१. सु० र० भा०—

कस्त्वं ब्रह्मन्नपूर्वः क्व च तव वसतिर्याऽखिला ब्रह्मसृष्टिः
कस्ते नाथस्त्वनाथः क्व च तव जनको नैव तातं स्मरामि ।
किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पं किमेतत्
त्रैलोक्यं भावगर्भं बलिमिदमवदद् वामनो वः स पायात् ॥

५६ येनाखण्डि शिखण्डशालिशिरसा चण्डीशकाण्डासनं
येनानाहि घनाहिनक्रगगनाकारः स नीराकरः ।
येनाच्छेदि लसद्दशासनशिरःश्रेणी जगच्छान्तये
दद्याद् दाशरथिः स ते जनकजाजानिश्चिरायुः श्रियम् ॥

—कस्यापि

५७ रेणुः शान्तिं सपदि समगाद् दिव्यतूर्याणि चोच्चै-
रापन्नृणामपगतवती पुष्पवर्षाणि चोर्वीम् ।
आशु श्रीमानजनि सविता देवताश्चामृतौघं
यस्योद्भूतौ विधृतिपुलकौ पातु रामः पितुर्नः ॥

—श्रीरामचन्द्रचरणानाम्

५८ कल्याणानां निधानं कलिमलमथनं पावनं पाव[ना]नां
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥

—हनुमतः

५९ कृत्वा लोकमिमं दलन्मृडमहाकोदण्डमौर्वीरव-
चुण्णोर्वीपतिगर्वपर्वतशिरःश्रेणीमणीरञ्जितम् ।
सीतां तत्क्षण एव लोकविलसत्सौन्दर्यसीमाधरां
यश्चापाशु(?)स पातु लक्ष्मणयुतः श्रीरामनामा विभुः ॥

—हरिकवेर्ममायम्

६० कनकनिकषभासा सीतयाऽऽलिङ्गिताङ्गो
नवकुवलयदामश्यामवर्णाभिरामः ।
अभिनव इव विद्युन्मण्डितो मेघखण्डः
शमयतु मम तापं सर्वतो रामचन्द्रः ॥

६१ पटुजलधरधीरध्वानमादाय चापं
पवनजवनमेकं बाणमाकृष्य तूणात् ।
अभयवचनदायी सर्वतः सानुजो मे
रणहतदनुजेन्द्रो रामचन्द्रः सहायः ॥

—कयोरप्येतौ

६२ निजकुचयुगलग्नं कुङ्कुमं शङ्कमाना
तव हृदि चितिमुद्रोदश्चदारुण्यभाजि ।
अधिकमधित लज्जां प्रोञ्छने येन सीता
रघुवरदरहासः सोऽस्तु वो मङ्गलाय ॥

—श्रीरामचन्द्रचरणानाम्

६३ कस्त्वं पीताम्बरोऽहं किमु वदसि मृषा चाम्बरं केन पीतं
मुग्धे कंसस्य शत्रुः शिव शिव सलिलं तस्य वैरि क्व दृष्टम् ।
मल्लास्यध्वंसनोऽहं किमिति निजमहो लास्यमध्वंसि चेति
व्याहारैर्वल्लवीनां निशि भवतु मुदेऽनुत्तरः श्रीपतिर्वः ॥

६४ यशोदासन्तोषावनिसहरसा वामनयना
मनोहंसश्रेणी निवसति लसन्मानससरः ।
सरोजावासायागतविरतिसंस्थापनकुटी
परप्रेम्णः शौरिः सुखयतु पटीरार्चिततनुः (?) ॥

६५ मायारन्तरि विश्वयन्तरि सदा धर्मद्विषां हन्तरि
त्रासत्रातरि कामदातरि दयादानव्रतस्थातरि ।
पद्माभर्तरि पञ्चवर्णपितरि क्षीरोदजामातरि
स्वात्मध्यातरि भक्तपातरि मनो भूयाद् बलभ्रातरि ॥

—केषामप्येते

६६ भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यैकमहानिधी रसिकतां राधादृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥

—सारङ्गस्य

६७ ये गोवर्द्धनमूलकर्द्दमरसव्यामृष्टबर्हाङ्गदा(?)
ये वृन्दावनकुक्षिषु व्रजवधूलीलोपधानानि च ।
ये चाभ्यङ्गसुगन्धयः कुवलयापीडस्य दानाम्भसा
ते वो मङ्गलमादिशन्तु सततं कंसद्विषो बाहवः ॥

—हरिहरस्य

६८ वृन्दारण्यमहीषु वंशनिनदामन्दामृतास्वादना-
निस्थ(स्प)न्दानि बुभुक्षयेव सुरभीवृन्दानि सन्दानयन् ।
मन्दारद्रुमवीथिकासु विहरन् वन्दारुवृन्दारक-
द्वन्द्वस्तुत्यभिनन्दितोऽस्तु जगदानन्दाय नन्दात्मजः ॥

—कृष्णपण्डितानाम्

६९ चैद्यं प्रोन्मदमुद्दलय्य रभसात्तं मागधं सागसं
कृत्वेव प्रसभं विधाय विकृतं तं रुक्मिणं शुष्मिणम् ।
हत्वाऽन्यान् निखिलान् क्षणेन बलिनो यो रुक्मिणीं नीतवा-
नारोप्याशु रथे त्रिलोककमनीं देवः स कृष्णोऽवतु ॥

—हरिकवेर्मभायम्

७० वत्स स्थावरव(क)न्दरेषु विचरन् दूरप्रचारे गवां
हिंस्रान् वीक्ष्य पुरः पुराणपुरुषं नारायणं ध्यायसि ।
इत्युक्तस्य यशोदया मुररिपोरव्याज्जगन्ति स्फुरद्-
बिम्बोष्ठद्वयगाढपीडनवशादव्यक्तभावस्मितम् ॥

—अभिनन्दनस्य

७१ सायं व्यावर्तमानाखिलसुरभिकुलाह्वानसंकेतनामा-
न्याभीरीवृन्दचेतोहठहरणकलासिद्धमन्त्राक्षराणि ।
सौभाग्यं वः समन्ताद्दधतु मधुभिदः केलिगोपालमूर्तेः
सानन्दाकृष्टवृन्दावनरसिकमृगश्रेणयो वेणुनादाः ॥

७२ यामिन्यां परिवृत्तिभाजि चलिते चाराय वृन्दे गवां
गोपानाञ्च विषा[ण]वेणुतुम(मु)लध्वाने समुत्सर्पति ।
गाढालिङ्गितराधिकाभुजलतावद्धस्य कंसद्विषो
यातुं स्थातुमनीश्वरस्य मनसो दोलायितं पातु वः ॥

—मदनस्य

७३ कलात्त(न्त?)मायालवकात्त(न्त)मूर्तिः
कलक्वणद्वेणुनिनादरम्यः ।
श्रितो हृदि व्याकुलयंस्त्रिलोकीं
श्रियेऽस्तु गोपीजनवल्लभो वः ॥

—क्रमदीपिकाकृतः

७४ पायाद् बुद्धवपुः स यत्र सहसा व्यालोडयत्यागमा-
नोङ्कारेण भयातुरेण चलितं विन्दुं विहाय क्वचित् ।
ऊकारः करपङ्कजं पुरभिदो भेजे त्रिशूलच्छलाद्
विन्दुश्चक्रमिषेण कैटभरिपोस्तस्थौ कराम्भोरुहे ॥

—भानुकरस्य

७५ वत्से मा गा विषादं श्वसनमुरुजवं सन्त्यजोर्द्ध्वप्रवृत्तः
कम्पः को वा गुरुस्ते भवतु वलभिदा जृम्भितेनात्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद् वः स हरतु दुरितं मन्थमूढां पयोधिः ॥

७६ मुग्धे मुञ्च विषादमत्र बलभित्कल्पो गुरुस्त्यज्यतां
सद्भावं भज पुण्डरीकनयने मान्यानिमानानय[1]।
इत्थं शिक्षयतः स्वयंवरविधौ धन्वन्तरेर्वाक्छला-
दन्यत्र प्रतिशे(षे)धमात्मनि विधिं शृण्वन् हरिः पातु वः ॥

७७ अलङ्करणमायुधं वसनमेतदित्याकुलैः
पुनः पुनरुदीरितं परिजनैरनाकर्णयन् ।
अनद्धपदपङ्कजः पतगपुङ्गवं दूरत-
स्त्यजना(न्न)जनिबन्धनं हरतु मे हरिर्बन्धनम् ॥

७८ पर्यङ्कं विसृजन् गणानगणयन् भूषामणिं विस्मर-
न्नुत्तालोक्ति गदागदेति निगदन् पद्मामनालोकयन् ।
निर्गच्छन्नपरिच्छदं खगपतिं चारोहमाणोऽवतु
ग्राहग्रस्तमतङ्गपुङ्गवसमुद्धाराय नारायणः ॥

—केषामप्येते

७९ शक्रं नक्रमिव प्रहाय धनदं कीनाशवद् यादसां
नाथं तूर्णमनाथवद् द्रुततरं प्रेताधिपं प्रेतवत् ।
लीलोन्मीलदुदारनी[र]दपतिश्यामाभिरामाकृतिं
यं वव्रे जलधेः सुता स भगवान् पीताम्बरः पातु वः ॥

—हरिकवेर्ममायम्

८० सकलभुवनबन्धोर्वैरमिन्दोः सरोजै-
रनुचितमिति मत्वा यः स्वप(पा)दारविन्दम् ।
घटय(यि)तुमिव मायी योजयत्याननेन्दौ
वटपुटदल[2]शायी मङ्गलं वः [कृ]षीष्ट ॥

—कस्यापि

---

१. °निमान्मानय सु० र० भा० । २. °दलपुट° शा० प० ।

*अथ लक्ष्मीः*

८१ युक्तं मानद मामनन्यमनसं वक्षःस्थलस्थायिनीं
भक्तामप्यवधूय कर्तुमधुना कान्तासहस्रं तव ।
इत्युक्त्वा फणभृत्फणामणिगतां स्वामेव मत्वा तनुं
निद्राच्छेदकरं हरेरवतु वो लक्ष्म्या विलासस्थितम् ॥

—कस्यापि

८२ स्फूर्जज्ज्योत्स्नासदृक्षाश्चमरसहचरीवालभारैः सदृक्षा-
श्चन्द्रश्रेणीसकक्षाः स्फु(स्फ)टिकमणिशिलाभङ्गसम्पत्सपक्षाः ।
श्रीखण्डोत्कर्षदक्षाः सितसरसिरुहां दत्तसौभाग्यभिक्षाः
शृङ्गारोपात्तशिक्षा मुररिपुमिलने पान्तु लक्ष्मीकटाक्षाः ॥

—हरिहरभट्टस्य

८३ श्लाघ्याशेषतनुः सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दचलितेनाक्रान्तलोको हरिः ।
बिभ्राणां मुखमिन्दुसुन्दरतरं चन्द्रार्कचक्षुर्द्वयं
स्थाने यां स्वतनोरपश्यदधिकां सा राधिका वोऽवतात् ॥

—आनन्दवर्धनस्य

८४ योगीन्द्रा मृगयन्ति यत्पदरजस्तेनापि यन्मृन्य(ग्य)ते
विश्वं येन विमोहितं चलदृशा तस्यापि यन्मोहनम् ।
पूर्णानन्दमयोऽपि यत्पदतलाघातेन धन्यायते
तद्वस्तु श्रुतिमल्लकैरकलितं राधाभिधं पातु वः ॥

—कस्यापि

८५ विरहकलनाहीनं दीनं करोति कराम्बुजे
भ्रमरमिथुनं भ्राम्यच्छोणस्फुरन्मणिमञ्जुलम् ।
कुतुकचलिता सा ते सीते दलन्नलिनोपमा
कलितकरुणा दृष्टिः पुष्टिं करोतु गिरां मयि ॥

—श्रीरामचन्द्रचरणानाम्

८६ उत्तुङ्गस्तनमण्डलोपरिलसत्प्रालम्बि(म्ब) मुक्तामणे-
रन्तर्बिम्बितमिन्द्रनीलशकलच्छायानुकारिद्युति ।
लज्जाव्याजमुपेत्य नम्रवदना स्पष्टं मुरारेर्वपुः
पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥

—कस्यापि

*अथ शिवः*

८७ अबीजप्रोद्भूतः शिरसि जलसेकादुपगतो
महत्त्वं यत्किञ्चित् सकलभुवनव्यापकतनुः ।
सदापर्णः स्मृत्या क्षणमपि समस्ताधिहरणं
तरुः कश्चिद् वाञ्छासमधिकफलं द्राग् वितरतु ॥

८८ भस्मान्धोरगफूत्कृतिस्फुटनटद्भालाक्षिवह्निज्वल-
ज्ज्वालास्विन्नहिमांशुमण्डलगलत्पीयूषधाराभरैः ।
सञ्जीवद्गजचर्मगर्जितभयत्रस्यद्वृषाकर्षण-
व्यावल्गन् स्फुटमद्रिजाविहसितो व्यग्रो हरिः पातु नः[1] ॥

८९ राजा राजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणित्वं
नागा नागात्मजार्द्धं न भसितधवलं यद्वपुर्भूषयन्ति ।
मा रामारागिणी भून्मतिरिति यमिनां येन वोऽदाहि मारः
सप्ताः सप्ताश्वतुन्नारुणकिरणनिभाः पातु बिभ्रत् त्रिनेत्रः ॥

---

१. सु० र० भा० पाठस्त्वयम्—
भस्मान्धोरगफूत्कृतिस्फुटभवद्भालस्थवैश्वानर-
ज्वालास्विन्नसुधांशुमण्डलगलत्पीयूषधारारसैः ।
सञ्जीवद्द्विपचर्मगर्जितभयभ्राम्यद्वृषाकर्षण-
व्यासक्तः सहजाद्रिजोपहसितो नग्नो हरः पातु वः ॥

९० कालीकेलीकलापक्रमकलितकलाकौतुका कुन्दकान्तिः
कल्पान्ते कालकल्पः क्रतुकदनकथाकन्दलीकूटकन्दः ।
कालोलक्रूरकण्ठः कलितकलकलक्लान्तकन्दर्पकान्ता-
कारुण्याक्रान्तकान्तः कलयतु कुशलं किङ्कराणां कपर्दी ॥

—केषामप्येते

९१ वाश्चारेड्ध्वजधृग्धृतोड्वधिपतिः कुध्रेड्गजानिर्गणे-
ड्गोराडारुडुरःसरेड्डुरुतरग्रैवेयकभ्राडरम् ।
उड्वीड्रुड्नरकास्थिधृक्त्रिदृगिभेडार्द्राजिनाच्छच्छदः
स स्तादम्बुमदम्बुदालिगलरुग्देवो मुदे वो मृडः ॥

—श्रीकालिदासस्यावसरविशेषे

९२ संरभादविभावितत्रिभुवनायासस्य कामद्विषो
नृत्यारम्भविजृम्भितैरवयवैर्ब्रह्माण्डमुद्भिन्दतः ।
निर्यन्मौलिविनिर्गताग्रचरणं प्रोल्लासिदोःपल्लवं
पायाद् वो बहिरम्भसः प्रविचलत्कूर्मायमाणं वपुः ॥

—कूर्मवराहस्य

९३ रूक्षाणां भूरिधाम्नां श्रितमधितिना प्रस्फुरद्भीमतारं
स्फारं नेत्रानलेन प्रसभनियमितोच्चापमीनध्वजेन ।
रामायत्तं पुरारेः कुमुदशुचिलसन्नीलसुग्रीवमङ्गं
प्लावङ्गं सैन्यमन्यद्दशवदनशिरश्छेदहेतुः श्रियेऽस्तु ॥

—धनपालस्य

९४ सहस्रारक्षैर्नङ्क्षैर्भसि तरिनीलोत्पलमयी-
मिवात्मानं मालामुपनयति पत्यौ दिविषदाम् ।
जिघृक्षौ च क्रीडारभसिनि कुमारे सह गणै-
र्हसन् वो भद्राणि द्रढयतु भवानीपरिवृढः ॥

—श्रीमुरारेः

९५ जगज्जीवनमव्याद् वः शम्भोरम्भोमयं वपुः ।
ब्रह्माण्डमपि यस्यान्तस्तरत्तुम्बीफलायते ॥

—कस्यापि

९६ स धूर्जटिजटाजूटो जायतां विजयाय वः ।
यस्यकपलितभ्रान्तिं करोत्यद्यापि जाह्नवी ॥

—शिवस्वामिनः

९७ पायाद् वः शितिकण्ठस्य कण्ठः श्यामाम्बुदोपमः ।
गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥

—कस्यापि

९८ जटाजूटे गङ्गां निटिलभुवि कान्तां शशिकलां
शरीरार्धे गौरीं कुमुदकलिकाविभ्रमकरीम् ।
त्रिलोक्याः सन्तापं त्रिविधमपि हर्तुं दधदसा-
वपायान्नः पायात् त्रिपुरदवमेघस्त्रिनयनः ॥

—हरिकवेर्ममायम्

९९ आसीने पूष्णि तूष्णीं व्यसनिनि शशिनि व्योम्नि कृष्णे सतृष्णे
दैत्येन्द्रे जातनिद्रे द्रवति मघवति क्लान्तकान्तौ कृतान्ते ।
अब्रह्मण्यं ब्रुवाणे कमलपुटकुटीश्रोत्रिये शान्त्युपाये
पायाद् वः कालकूटं झटिति कवलयन् लीलया नीलकण्ठः ॥

—लक्ष्मणखण्डप्रशस्तेः

१०० स्पष्टव्याकृष्टदंष्ट्राविकटमुखतटोत्तालदन्तान्तराल-
न्यस्तब्रह्माण्डख(!)ण्डग्रसनघनकडत्कारकोलाहलिन्यः ।
चण्डीनाथस्य युष्मानविरलविलसज्जैत्रलालाटनेत्र-
ज्वालाहेलानिपीतप्रलयजलधयः पान्तु कल्पान्तलीलाः ॥

—कस्यापि

१०१ कल्पान्तक्रोधनस्य त्रिपुरविजयिनः क्रीडया सञ्चरिष्णोः
कृत्वाऽपि प्राणिजातैर्निजम(मु)खकुहरातिथ्यमप्राप्ततृप्तेः ।
दिग्भित्तीः प्रेक्ष्य शून्यः प्रलयजलनिधिप्रेक्षितात्मीयमूर्ति-
ग्रासव्यासक्तिमोघश्रमजनितरुषः पान्तु वो गर्जितानि ॥

—एतौ भेरीभाङ्कारस्य

१०२ पद्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव ।
अर्चिर्निःशेष[1]चूडाशशिगलितसुधाघोरझङ्कारिकोणं
तार्तीयिकं[2] पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥

—भवभूतेः

१०३ उद्यद्विलोचनहुताशतडिद्विकाश-
व्यासङ्गिनी सुरधुनीपयसा सगर्भा ।
भ्राजत्कलानिधिबलाकविशोभमाना
पायाज्जटाघनघटा वृषभध्वजस्य ॥

*अथ ताण्डवम्*

१०४ भद्रं चन्द्रकले शिवं सुरनदि श्रेयः कपालावले
कल्याणं भुजगेन्द्रवल्लि कुशलं विष्वक् जटासन्तते ।
इत्याहुर्मि(र्मि)लिताः परस्परममूर्यस्मिन् प्रशान्तिं गते
कल्पान्तारभटीभटस्य भवतात् तद् वः श्रिये ताण्डवम् ॥

१०५ पायादायासखेदक्षुभितफणिफणारत्ननिर्यन्त्र(त्न)निर्य-
च्छायामायापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवाकम् ।
अभ्रान्तभ्रान्तचूडातुहिनकरकरानीकनालीकनाल-
च्छेदामोदानुधावद्द्रुहिणरथखगं[3] धूर्ज[टे]स्ताण्डवं नः ॥

—कस्यापि

---

१. °निष्टप्तं; २. °यं यत् सु० र० भा० । ३. °द्रुधिरमिव खगे सु० र० भा० ।

१०६ अस्थीन्यस्थीन्यजिनमजिनं भस्म भस्मेन्दुरिन्दु-
गङ्गा गङ्गो र···उरग(?)इत्युल्लसत्सम्भ्रमाणाम् ।
भूषावेषोपकरणगणप्रापणव्यापृतानां
नृत्यारम्भः प्रणयिनि शिवे पान्तु वाचो गणानाम् ॥

—धनपालस्य

१०७ आर्द्रां कण्ठे मुषाब्जस्रजमुपनमयत्यम्बिका जानुलम्बां
स्थाने कृत्वेन्दुलेखां निबिडयति जटाः पन्नगेन्द्रेण नन्दी ।
कालः कृत्तिं(त्तिं)निबध्नात्युपनयति करे कालरात्रिः कपालं
शम्भोर्नृत्यावतारे परिषदिति पृथक्(ग्)व्यापृता वः पुनातु ॥

—कस्यापि

१०८ देवा दिक्पतयः प्रयात परत खं मुञ्चताम्भोमुचः
पातालं व्रज मेदिनि प्रविशत क्षोणीतलं भूधराः ॥
ब्रह्मन्नुन्नय दूरमात्मभुवनं नाथस्य नो नृत्यतः
शम्भोः सङ्कटमेतिदित्यवतु वः प्रोछा(त्सा)रणा नन्दिनः ॥

—मा(म)हानाटकात्

१०९ सन्ध्याताण्डवडम्बरप्रणयिनो[1] भर्गस्य चण्डा भ्रम-
व्यावल्गद्भुज[2]दण्डमण्डलभुवो झञ्झानिलाः पान्तु नः ।
येषामुच्छलतां जवेन झटिति[3] व्यूहेषु भूमीभृता-
मुड्डीनेषु विडौजसा पुन[र]सौ दम्भोलिरालोकितः ॥

—सोमनाथप्रशस्ते(स्तौ)

११० अकृशं कुचयोः कृशं विलग्ने
विपुलं[4] चक्षुषि विस्तृतं नितम्बे ।
अरुणाधरमाविरस्तु चित्ते
करुणाशालि कपालिभागधेयम् ॥

---

१. व्यसनिनोः ; २. °भ्रमिव्यानृत्यद्भु° ; ३. झगिति सु० र० भा० ।
४. वलग्ने विततं सु० र० भा० ।

१११ सिंहादुत्थाय कोपाद्धधडधडधडद् धावमाना नितान्तं
दैत्यानां तीक्ष्णशस्त्रैस्ततडतडतडत् त्रोटयन्ती शिरांसि।
तेषां रक्तं पिबन्ती घघटघटघटत् प्रेषयन्ती पिशाचा-
न्नृप्तान्तृप्ता हसन्ती खखडखडखडच्छाम्भवा नः पुनातु ॥

—कस्यापि

११२ विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषा पौरुषोपघ्ननिघ्नं
निर्विघ्नं निघ्नती वः शमयतु शमलं[1] भूरिभावा भवानी ॥

—श्रीबाणस्य

११३ व्यानम्रा दयिताननने मुकुलिता शार्दूलचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे
पार्वत्याननसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

—भासस्य

११४ दिवं रेजयन्ती मनो मज्जयन्ती
मङ्गलं(?)जयन्ती रिपूनेजयन्ती।
दृशा वञ्ज(?)यन्ती हरं रञ्जयन्ती
भयं भञ्जयन्ती जयन्ती पुनातु ॥

—गद्यपद्यस्य

११५ वैरिव्यूहं विदूरादविरलगरलोद्गारधारावसिक्तं
भक्तं नक्तन्दिनेऽपि श्रवदमितसुधासारसिक्तं वितन्वन्।
उन्मीलन्निन्द्रनीलस्फटिकमणिरुचा स्वैरमाबद्धवैरः
पायाद् युष्मानपायात्पुरमथनवधूचारुचञ्चत्कटाक्षः ॥

—कस्यापि

१. दुरितं सु० र० भा०।

*अथ गणपतिः*

११६ गण्डस्थलच्चलदविरलमदजलकल्लोललोलरोलम्बः ।
विघ्ननिवारणकारणवारणवदनः करोतु कल्याणम् ॥
—कस्यापि

११७ सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणपतौ भोगसङ्कोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे[:]
वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥
—भवभूतेः

११८ पायाद् गजेन्द्रवदनः स इमां त्रिलोकीं
यस्योद्गतेन गगने महता करेण ।
मूलावलग्नसितदंतविशाङ्कुरेण
नालायितं तपनबिम्बसरोरुहस्य ॥
—गणपतेः

११९ सुवर्णगिरिकर्णिके तरलतारकाकेसरे
चलज्जलदषट्पदे स्फुटदिगन्तपत्राष्टके ।
स वः प्रमथनायकः प्रदिशतु श्रियं यत्करः
करोति जगदम्बुजे वलितनाललीलायितम् ॥
—क्षेमेन्द्रस्य

१२० विघ्नेशो वः स पायाद् विहृतिषु जलधिं पुष्कराग्रेण पीत्वा
यस्मिन्नुद्धृत्य तोयं वमति बहुतरं[1] दृश्यते व्योम्नि देवैः ।
क्वाप्यम्भः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यनन्तः क्वचिच्छ्रीः
क्वाप्यौर्वः क्वापि शैलाः क्वचन मणिगणाः क्वापि नक्षत्रचक्रम्[2] ॥
—महानाटकात्

१. तदखिलं; २. नक्रादिसत्त्वाः सु० र० भा० ।

१२१ दानस्रोतःसहस्रैर्दशनरुचिचयैः कुम्भसिन्दूरपूरै-
रुद्भूतैरेककालं प्रकटितरजनीघस्रसन्ध्याविलासाः ।
आस्फालत्स्या(?)लघण्टावहलकलकलव्याकुलाहीन्द्रहारा
हेरम्बस्याङ्गहारप्रचलवदनयः(?)पान्तु वो नृत्यलीलाः ॥

१२२ कुम्भोपान्तं त्यजद्भिर्मदज[ल]निवहैर्लब्धसेकातिरेक-
प्रोन्मीलद्बालचन्द्राकृतिदशनमिषादङ्कुरं धारयन्ती ।
आलोलत्कर्णतालप्रचलमधुकरासार[कासार?]पुष्पा
विस्तीर्णा हस्तवल्ली दिशतु गणपतेः प्रार्थ्यमानं फलं वः॥

१२३ ते दूरोद्दण्डशुण्डाकुहरकवलितो[त्]क्षिप्तसप्ताब्धिलब्ध-
स्वेच्छासेकप्रमोदप्रभवनवरवद्राविताशागजेन्द्राः ।
देवस्याकाण्डकण्डूकरकरटतटाटोपसङ्घट्टभग्न-
क्षोणीभृत्तुङ्गशृङ्गाः पुरमथनशिशोः पान्तु वो दुर्विलासाः ॥

—भेरीभाङ्कारस्यैते

१२४ स्मेरे चन्द्रावतंसे हसति सकुतुकं षण्मुखे सोपहासं
पश्यत्यालीकदम्बे गणसदसि शिशुक्रीडितं प्र(प्रे)क्षमाणे ।
मा मेति व्याहरन्त्यास्तुहिनगिरिभुवः कम्पमानाग्रपाणेः
कर्षन्ती कर्णकेलीकिसलयमवताद् बालहेरं[ब]शुण्डा ॥

—अकब्बरीकालिदासस्य

१२५ कृपापाङ्गाद् यस्य श्रयति रसनां शुभ्रवसना
जनानां प्रत्यूहाः सपदि विलयं यान्ति विपुलाः ।
प्रसर्पन्ते कान्ताश्चपलनयनान्ताश्च निकटं
स नः सिद्धिं बुद्धिं दिशतु भगवानेकरदनः ॥

—मत्कनिष्ठभ्रातुश्चक्रपाणिकवेः

*अथ अशी (आशीः) प्रकीर्णकम् । तत्र स्कन्दः*

१२६ स्वेच्छारम्यं लुठित्वा पितुरुरसि चिताभस्मधूलीसिताङ्गो
गङ्गावारिण्यगाधे झटिति पृथुजटाजूटतो दत्तझम्पः ।

सद्यः सीत्कारकारी जलजडिमरणद्दन्तपंक्तिर्गृहो वः
कम्पी पायादपायाज्ज्वलितशिखिशिखे चक्षुषि न्यस्तहस्तः ॥

—श्रीवाणस्य

*अथ गङ्गा*

१२७ शैवालश्रेणिशोभां दधति हरजटावल्लयो हन्त यस्या-
स्तस्याः सोल्लासवल्गद्धरशफरतुलां यत्र धत्ते कलावान् ।
उन्मीलद्भोगिभोगावलिसुभगसिताम्भोजसम्भाविताम्भा
गङ्गाऽनङ्गारिसङ्गा मम महति विधौ मङ्गलान्यातु(त)नोतु ॥

—श्रीमत्कृष्णपण्डितानाम्

१२८ आदावादिपितामहस्य नियमव्यापारपात्रे जलं
पश्चात् पन्नगशायिनो भगवतः पादोदकं पावनम् ।
भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या कल्मषनाशिनी भगवती भागीरथी पातु नः ॥

—श्रीशङ्कराचार्याणाम्

१२९ पौलोम्याऽर्पितपादुका चरणयोः पाणिस्फुरद्वेत्रया
भारत्या परितो निवारितजना पद्माकरालम्बिनी ।
प्रक्रान्तस्तुतिरद्रिराजसुतया प्राचीनवाचां गणै[र्]
निर्याता पतिमन्दिरं सुरसरित् स्वान्ते मम द्योतताम् ॥

—कस्यापि

१३० तव करकमलस्थां स्फाटिकीमक्षमालां
नखकिरणविभिन्नां स्फाटिकीबीजबुद्ध्या ।
अनुकर[1]मनुकर्षन् येन कीरो निषिद्धः
स भवतु मम भूत्यै वाणि ते मन्दहासः ॥

—कमलाकरशेषस्य

१. प्रतिकल° सु० र० भा० ।

१३१ कृतक्रोधे यस्मिन्नमरनगरी मङ्गलरवा
नवातङ्का लङ्का समजनि वनं वृश्चति सति ।
सदा सीताकान्तप्रणतिरतिविख्यातमहिमा
हनूमानव्याद् वः कपिकुलशिरोमण्डण(न)मणिः ॥

१३२ आगस्कारिणि कैटभप्रमथने[1] तत्ताडनार्थं रुषा
नाभीपङ्कजमस्त्रतां गमयितुं जाते प्रयत्ने श्रियः ।
स्वावासो[2]न्मथनोपपादितभयभ्रान्तात्मनस्तत्क्षणा[3]-
द्ब्रह्मण्यपराः पुरातनमुनेर्वाग्वृत्तयः पान्तु[4] वः ॥
—कयोरप्येतौ

१३३ दिव्यस्त्रीकुचपत्रवल्ल्यविरतोल्लासैकहेतुं सुधा-
पूर्णं यः कलशं दधज्जलनिधेराविर्बभूवेच्छया ।
नानाव्याधिभरातुराखिलजगज्जीया(वा)तुरायुश्चिरं
दिश्याद् वो दुरितौघकुञ्जरहरिर्देवः स धन्वन्तरिः ॥

१३४ उदयगिरिशि[रः]स्थो निद्रया मूढमेत-
ज्जगदगदमशेषं निर्मिमीतेऽनिशं यः ।
अमिततमितमिस्रोद्दामदारिद्र्यहारि-
प्रसु(स्र)मरकिरणौघः स्तान्मुदे वः स देवः ॥
—वैद्यवल्लभकृतः

१३५ खं येऽभ्युज्ज्वलन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमधिक्षिप्ताब्जभासश्च ये ।
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रमन्त्युभयेऽपि ते दिनकृतः पादाः श्रिये सन्तु नः ॥
—आनन्दवर्धनस्य

---

१. कालनेमिदलने स० क० । २. आवासो° स० क० । ३. सम्भ्रमा° स० क० । ४. °नेर्वाचः प्रसीदन्तु स० क० ।

इत्यासी:(शी:)प्रकीर्णकमुक्ताफलानि

*अथ भगवन्महिमादिकथनम्*

१३६ आश्चि(श्च)र्यं मथुरान्तिके द्रव[म]मयी काचित्तमःपद्धति-
स्तस्यास्तीरतमालकाननभुवि श्यामाकृतिश्चन्द्रिका ।
सा राधामुखपद्मबोधनकरी रात्रं(त्रिं)दिवं द्योतते
तामेव प्रतिपद्य शुष्यतितरां संसारवारांनिधिः ॥

१३७ वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणा-
दौदार्यादघशोष[णा]दगणितश्रेयःपदप्रापणात् ।
सेव्यः श्रीपतिरेव सर्वजगतामेते यतः साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः॥

१३८ हृत्या मूर्त्या च कृष्णस्तदनु च यमुनानीरपूरे विहारः
किञ्च श्यामाभिराभिः कुवलयदलदृग्वल्लवीभिः प्रसङ्गः ।
कुञ्जध्वान्तैकपुञ्जे पुनरधिवसतिः शीर्षभूषाशिखण्डै-
स्तस्मादस्माकमन्तस्तितमिरहतिमहो वक्ति वेदः सखेदः ॥

१३९ त्यक्ता जीर्णदुकूलवद् वसुमती बद्धोऽम्बुधिर्बिन्दुवद्
बाणाग्रेण जरत्कपोतक इव व्यापादितो रावणः ।
लङ्का काऽपि विभीषणाय सहसा मुद्रेव हस्तेऽर्पिता
श्रुत्वैवं रघुनन्दनस्य चरितं को वा न रोमाञ्चति ॥

१४० अयं क्षीराम्भोधेः पतिरिति गवां पालक इति
श्रितोऽस्माभिर्दुग्धोपनयनधिया गोपतनयः ।
अनेन प्रत्यूहो व्यरचि विभुना येन जननी-
स्तनादप्यस्माकं सकृदपि पयो दुर्लभमभूत् ॥

१४१ भ्रमति गिरिराट् पृष्ठे गर्जत्युपश्रुति[1] सागरो
दहति विततज्वालाजालैर्जृम्भन्ति विषानलः ।

१. °त्युपर्यपि । २. °जालो ज° सु० र० भा० ।

स तु विनिहितग्रीवाकाण्डः कटाहपुटान्तरे[1]
स्वपिति भगवान् कूर्मो निद्राभरालसलोचनः ॥

१४२ ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरा
वार्धेर्वारि तरन्ति वानरभटान् सन्तारयन्तेऽपि च ।
नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः
श्रीमद्दाशरथेः प्रभावमहिमा सोऽयं समुज्जृम्भते ॥

—श्रीहनुमतः

१४३ कानीनस्तु पितामहः समभवत् पित्राद्योगोलका-
स्तत्पुत्राश्च युधिष्ठिरप्रभृतयः कुडा(?)ह्यमी पाण्डवः(वाः) ।
पञ्चानां द्रुपदात्मजा सहचरी युद्धे हता बान्धवाः
श्रीकृष्णेन कुलं कलङ्कनिचितं नीतं जगद्बन्ध(न्धु)ना ॥

—कस्यापि

*अथ भगवन्नाममहिमा*

१४४ विष्णोर्नामैव पुंसः शमलमपहरेत्पुण्यमुत्पादयेच्च
ब्रह्मादिस्थानभोगाद् विरतिमथ गुरोः श्रीपदद्वन्द्वभक्तिम् ।
तत्त्वज्ञानञ्च विष्णोरिह मृतिजननभ्रान्तिबीजञ्च दग्ध्वा
सम्पूर्णानन्दबोधे महति च पुरुषे स्थापयित्वा निवृत्तम् ॥

१४५ मधुरमधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्लीसत्फलं चित्स्वरूपम् ।
सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर नरमात्रं तारयेत् कृष्णनाम ॥

—श्रीमद्भगवद्व्यासचराणाम् (°रणानाम्)

१४६ साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥

---

१. °कुटोदरे सु० र० भा० ।

१४७ कलौ युगे कल्मषमानसानामा(म)न्यत्र धर्मे खलु नाधिकारः ।
रामेतिवर्णद्वयमादरेण सदा जपन्मुक्तिमुपैति जन्तुः ॥

१४८ आर्ता विषण्णाः शिथिलाश्च भीताः
घोरेषु च व्याधिषु वर्तमानाः ।
सङ्कीर्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति ॥

—एते पुराणेभ्यः

१४९ तव यदि नाम गृहीतं रघुनाथ घुणाक्षरन्यायात् ।
अपि कृतदुःकृतराशेर्मम किं यमकिङ्कराः करिष्यन्ति ॥

१५० राम त्वत्तोऽधिकं नाम यदुच्चारणतो जनाः ।
विनाऽपि सेतुं बन्धेन तरन्ति भवसागरम् ॥

—कयोरप्येतौ

१५१ आकृष्टिः कृतचेतसां सुमहतामुच्चाटनं त्वंहसा-
माचाण्डा[ल]ममूक(?)लोकसुलभो वश्यश्च मुक्तिश्रियः ।
मन्त्रोऽयं रसनास्पृगेव फलति श्रीकृष्णनामात्मको
नो दीक्षां न च दक्षिणां न च पुरश्चर्यामसावीक्षते ॥

—लक्ष्मीधरस्य

१५२ चतुर्णां वेदानामिव हृदयमाकृष्य विधिना
चतुर्भिर्वर्णैर्यत्स्फुटमघटि नारायणपदम् ।
तदेतद् गायन्तो वयमनिशमात्मानमधुना
पुनीमो जानीमो न हरिपरितोषाय किमपि ॥

१५३ आद्योऽन्तःस्थोऽप्यनन्तं दिशति फलमसावद्वितीयं द्वितीय-
स्तार्तीया(यी)कः पवर्गप्रकृतिरपि बलेनापवर्गं प्रसूते ।
तुर्यश्चातुर्यभाजां वितरति चतुरः श्रोत्रपान्थः पुमर्थान्
राम त्वन्नामवर्णास्त्रिभुवनविषये कौतुकं कुर्वते नः ॥

१५४ रेफव्यञ्जनराजता तव त(तु?)राकारप्रकर्षः स्वरे-
ष्वन्त्यस्यापि मकार विस्फुरति ते वर्गाक्षरे वादिता ।
यैः सम्भूय निगद्यते रघुकुलालङ्कारहीराङ्कुरो
देवः क्षोणिसुतापयोधरतटीशृङ्गारहारो हरिः ॥

—श्रीहनुमतः

१५५ राकारोच्चारणादेव मुखान्निर्याति पातकम् ।
तदागमनभीत्येव मकारस्तत्पिधानकम् ॥

१५६ नाम्नोऽस्ति यावती शक्तिः पापनिर्द्दहने हरेः ।
तावत्कर्तुं न शक्नोति पातकं पातकी जनः ॥

१५७ वेपन्ते दुरतानि मोहमहिमा मोहं समालम्बते
सातङ्कं नखरञ्जिनीं कलयते श्रीचित्रगुप्तः कृती ।
सानन्दं मधुपर्कसम्भृतिविधौ वेधाः करोत्युद्यमं
वक्तुं नाम्नि तवेश्वराभिलषिते ब्रूमः किमन्यत्परम् ॥

—केषामप्येते

१५८ अस्मदाद्यविषयेऽपि विशेषे
राम नाम तव धाम गुणानाम् ।
अन्वबन्धि भवतैव तु कस्मा-
दन्यथा तनु जनुस्त्रितयेऽपि ॥

*अथ भक्तिमहिमा*

१५९ व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का
कुब्जायाः किमु नाम रूपमधिकं किं तत्सुदाम्नो धनम् ।
वंशः को विदुरस्य यादवपतेरुग्रस्य किं पौरुषं
भक्त्या तुष्यति केवलं न च गुणैर्भक्तिप्रियो माधवः ॥

—दक्षिणायनस्य

१६० अनुचितमुचितं वा कर्म कोऽयं विभागो
भगवति परमास्तां भक्तियोगो द्रढीयान् ।
किरति विषमहीन्द्रः सान्द्रपीयूषमिन्दु-
र्द्वयमपि स महेशो निर्विशेषं बिभर्ति ॥

—विष्णुपुरीपादानाम्

१६१ यदि मधुमथन त्वदङ्घ्रिसेवां
हृदि विदधाति जहाति वा विवेकी ।
तदखिलमपि दुःकृतं त्रिलोके
कृतमकृतं न कृतं कृतश्च सर्वम् ॥

१६२ अलमलमिदमेव प्राणिनां पातकानां
निरशनविश(ष)ये या कृष्णकृष्णेति वाणी ।
यदि भवति मुकुन्दे भक्तिरानन्दसान्द्रा
विलुठति चरणाब्जे मोक्षसाम्राज्यलक्ष्मीः ॥

—कयोरप्येतौ

*अथ कथामहिमा*

१६३ श्रुतमप्यौपनिषदं दूरे हरिकथामृतात् ।
यन्न सन्ति द्रवच्चित्तहर्षाश्रुपुलकोद्गमाः ॥

—कस्यापि

१६४ नैव दिव्यसुखभोगमर्थये नापवर्गमपि नाम कामये ।
यान्तु कर्णविवरं दिने दिने कृष्णकेलिचरितामृतानि मे ॥

—कविरत्नस्य

१६५ त्वत्कथामृतपाथोधौ विहरन्तो महामुदः ।
कुर्वन्ति कृतिनः केचिदपवर्गं तृणोपमम् ॥

—श्रीधरस्वामिनाम्

—५—

*तत्रैव गंगा (?) । मथुरामहिमा*

१६६ हे मातर्मथुरे त्वमेव नियतं धन्यासि भूमीतले
निर्वो(र्व्या?)जं नतयः शतं सविधयस्तुभ्यं सदा सन्तु नः ।
हित्वा हन्त नितान्तमद्भुतगुणं वैकुण्ठमुत्कण्ठया
त्वय्यम्भोजविलोचनः स भगवान् येनावतीर्णो हरिः ॥

१६७ वितरति मुदमर्दनः प्रभुस्ते नहि भजमानजनाय यं कदापि ।
वितरसि वत भक्तियोगमेतं तव मथुरे महिमा गिरामभूमिः ॥

—समाहत्तु(र्तु?)रेतौ

*भक्तमहिमा*

१६८ पृथ्वी तावदियं महत्तु महती तद्वेष्टनं वारिधिः
पीतोऽसौ कलशोद्भवेन मुनिना स व्योम्नि खद्योतवत् ।
तद्विष्णोर्दनुजाधिनाथदमने पूर्णं पदं नाभवद्
देवोऽसौ वसतीह यस्य हृदये तस्मान्महान्नापरः ॥

१६९ चेतः प्राप्य मनुष्यतामसुलभां तत्रापि विप्रान्मतां
तत्राप्यक्षरदक्षतामिति महालाभं वृथा मा कृथाः ।
आनन्दाय कलेर्जयाय नितरां संसारविच्छित्तये
श्रीगोविन्दपदारविन्दयुगलीभाजं समाजं भज ॥

१७० हरिस्मृत्याह्लादस्तिमितमनसो यस्य कृतिनः
सरोमाञ्चः कम्पो नयन[म]पि सानन्दसलिलम् ।
तमेवाचन्द्रार्कं वह पुरुषधौरेयमवने
किमन्यैस्ते भारैर्मसदृनगत्या गतिपरैः ॥

—सर्वानन्दस्य

१७१ तेभ्यो नमोऽस्तु भववारिधिकर्मपङ्क-
सम्मग्नमोक्षणविचक्षणपादुकेभ्यः ।

कृष्णेति वर्णयुगलश्रवणेन येषा-
मानन्दथुर्भवति नर्तितरोमवृन्दः ॥

—उत्कलस्य

१७२ तद्भक्तः सरितां पतिं चुलुकवत् खद्योतवद् भास्करं
मेरुं पश्यति लोष्टवत् किमपरं भूमेः पतिं भृत्यवत् ।
चिन्तारत्नचयं शिलाशकलवत् कल्पद्रुमं काष्ठवत्
संसारं तृणराशिवत् किमपरं देहं निजं भारवत् ॥

—सर्वकस्य

१७३ श्रीविष्णोः श्रवणे परीक्षिदभवद् वैयासि(स)किः कीर्तने
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने ।
अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः
सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परा ॥

१७४ ज्ञानावलम्बकाः केचित् केचित्कर्मावलम्बकाः ।
वयं तु हरिदासानां पादत्राणावलम्बकाः ॥

—कयोरप्येतौ

*अथ भक्तजनोक्तिः*

१७५ धन्यानां हृदि भासतां गिरिदरिप्रत्यग्रकुञ्जौकसां
सत्यानन्दमयं विकारविभवव्यावृत्तमन्तर्महः ।
अस्माकं किल बल्लवीरतिरसो वृन्दाटवीलालसो
गोपः कोऽपि महेन्द्रनीलरुचिरश्चित्ते मुहुः क्रीडति ॥

१७६ ध्यानातीतं किमपि परमं ये तु जानन्ति तत्त्वं
तेषामास्तां हृदयकुहरे शुद्धचिन्मात्र आत्मा ।
अस्माकं तु प्रकृतिमधुरः स्मेरवक्त्रारविन्दो
मेघश्यामः कनकपरिधिः पङ्कजाक्षोऽयमात्मा ॥

१७७ जातु प्रार्थयते न पार्थिवपदं नैद्रे(न्द्रे) पदे मोदते
सन्धत्ते न च योगसिद्धिषु धियं मोक्षं न चाकाङ्क्षते ।
कालिन्दीतटसीमनि स्थिरतडिन्मेघद्युतौ केवलं
शुद्धे ब्रह्मणि वल्लवीभुजलताबन्धे मनो धावति ॥

—कविरत्नस्यैतौ

१७८ योगाभ्यासवशीकृतेन मनसा ये निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते ।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनोदरे किमपि यन्नीलं महो धावति ॥

१७९ शोध्यौ तत्त्वंपदार्थावपि जहदजहल्लक्षणा कल्पनीया
त्याज्यावंशौ विरुद्धौ तदनु ननु तयोर्लक्ष(क्ष्य)योरैक्यबुद्धिः ।
यत्रैतेतिरलं नः (?) स्फुरतु हृदि परं ब्रह्म निर्वाणरूपं
क्रीडद् गोपाङ्गनाभिः परिवृतमभितः पालकं पाण्डवानाम् ।।

१८० मुग्धं मां निगदन्तु नीतिनिपुणा भ्रान्तं मुहुर्वैदिका
मन्दं बान्धवसञ्चया जडधियं मुक्तादराः सोदराः ।
उन्मत्तं धनिनो विवेकनिपुणाः कामं महादाम्भिकं
मोक्तुं न क्षमते मनागपि मनो गोविन्दपादस्पृहाम् ॥

—केषामप्येते

१८१ मुरारेर्मारारेस्त्रिभुवननिदानस्य च मिथो
न भेदोऽस्तीत्येवं सकलनिगमौघस्य भणितिः ।
तथाप्याभीराणां ललितललनामण्डलगते
मम श्यामाकारे वसति परमब्र[ह्म]णि मनः ।।

—गोपीनाथपण्डितानाम्

१८२ धातारं विदधातु चेतसि चिरं कश्चिद् विपश्चित् पुन-
र्देवेशं कतिचिन्महेशमनिशं ध्यायन्तु शुद्धान्तराः ।

लीलोन्मीलदुदारनीरदपतिश्यामाभिरामद्युतिं
गोविन्दं गुणसुन्दरं मम पुनः स्वान्तं मुहुर्ध्यायति ॥

—हरिकवेर्ममायम्

१८३ सन्ध्यावन्दन भद्रमस्तु भवते स्नानाय तुभ्यं नमो[1]
हे देवाः पितरश्च तर्पणविधौ नाहं क्षमः क्षम्यताम् ।
यत्र क्वापि निषद्य यादवकुलोत्तंसस्य कंसद्विषः
स्मारं स्मारमघं हरामि तदलं मन्ये किमन्येन मे ॥

—माधवपुरीपादानाम्

१८४ व्यत्यस्तपादमवतंसितबर्हिबर्हं
साचीकृताननिवेशितवेणुरन्ध्रम् ।
तेजःपरं परमकारुणिकं पुरस्तात्
प्राणप्रयाणसमये मम सन्निधत्ताम् ॥

१८५ हन्त याऽहं तया नद्धा चिन्तया किन्तया मम ।
सन्दधे नन्दधेनूनां पालके बालके मनः ॥

१८६ पुरारौ च मुरारौ च न भेदः परमार्थतः ।
तथापि परमां प्रीतिं करवे(वै) मुरवैरिणि ॥

१८७ उ(अ)पसर तावदविद्ये क्षणमपि विद्ये मनाक् तिष्ठ ।
यावन्नयनचकोरी हरिमुखचन्द्रामृतं पिबति ॥

—केषामप्येते

१८८ श्रुतयः पलालकल्पाः किमिह वयं साम्प्रतं चिनुमः ।
अह्रियत पुरैव नयनैराभीरीभिः परं ब्रह्म ॥

—रघूपाध्यायस्य

---

१. भो स्नान तुभ्यं नमो सु० र० भा० ।

१८९ हरिः सेव्यो हरिः सेव्यो हरिः सेव्यो निरन्तरम् ।
गतं जन्म गतं जन्म गतं जन्म निरर्थकम् ॥

१९० शरीरं सुरूपं तथा वा कलत्रं
धनं मेरुतुल्यं वचश्चारु चित्रम् ।
न लग्नं मनश्चेद्धरेरङ्घ्रियुग्मे
ततः किं [ततः किं ततः किं ततः किम्] ॥

१९१ आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेव सुनिष्पन्नं ध्येयो नारायणः सदा ॥

१९२ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिशे(षे)धास्तु ये तयोरेव(?)किङ्कराः ॥

१९३ अष्टमी भव तु(त)नुर्महेशितुः कैटभारियजनाय यत्नतः(?) ।
यौवनेऽसि नवमीनकेतनः किन्त्वमत्र दशमी करिष्यसि ॥

१९४ तं गोरज[श्] छुरितकुञ्चितकुन्तलाग्रं
गोवर्धनोद्धरण उद्धतबाहुदण्डम् ।
गोपीस्तनस्तवकमण्डलमर्दिताङ्गं
गोविन्दमिन्दुवदनं भज साधु चेतः ॥

१९५ अन्ते सहायमभिवाञ्छसि चेत् प्रयाणे
तं पुण्डरीकनयनं भज साधु चेतः ।
यः प्रत्यपद्यत पुरा शरणं गतानां
दूत्यं दयार्द्रहृदयो भुवि पाण्डवानाम् ॥

१९६ निरर्थकं तीर्थकदर्थनाभिः
प्रीयेत कायः किमपायपात्रम् ।
सुखे शयानः शयने शरण्यं
श्रय श्रियः कान्तमनन्तमन्तः ॥

—केषामप्येते

१६७ तृणादपि च नीचेन तरोरपि तितिक्षुणा ।
अमानिना मानदेन कीर्तनीयः सदा हरिः ॥

—श्रीभगवतः

१६८ हरिरेव गतिर्हरिरेव गति-
र्न हरेरपरोऽस्ति गतिर्जगति ।
इति हा परिभाव्य पदाम्बुरुहं
नृहरेः स्मर रे सुचिरं रुचिरम् ॥

—हरिकवेर्ममायम्

१६९ स्वर्गार्थाया व्यवहृतिरसौ दीनयत्येव लोकान्
मोक्षापेक्षा जनयति जनं केवलं क्लेशभाजम् ।
योगोद्योगः परमविरसस्तादृशैः किं प्रयासैः
सर्वं त्यक्त्वा मम तु रसना कृष्ण कृष्णेति वौ(वक्)तु ॥

—र(क)स्यापि

२०० योगश्रुत्युपपत्तिनिर्जनवनध्यानाद्यसम्भावित-
स्वाराज्यं प्रतिपद्य निर्भरममी मुक्ता भवन्तु द्विजाः ।
अस्माकन्तु कदम्बकुञ्जकुहरप्रोन्मीलदिन्दीवर-
ग्रामश्यामलधामनाम जुषतां जन्मास्तु लक्षावधि ॥

—श्रीमदीश्वरपुरीपादानाम्

*अथ भक्तप्रार्थना*

२०१ संसाराम्भसि सम्भृतभ्रमिभरे गम्भीरतापत्रय-
ग्राहेणाभिगृहीतमुग्रपतिना क्रोशन्तमन्तर्भयात् ।
दीप्तेनाद्य सुदर्शनेन विबुधक्लान्तिच्छिदाकारिणा
चिन्तासन्ततिरुद्धमुद्धर हरे मच्चित्तदन्तीश्वरम् ॥

२०२ विवृतविविधबाधे भ्रान्तिवेगादगाधे
बलवति भवपूरे मज्जतो मे विदूरे ।

अशरणजनबन्धो हा कृपाकौमुदीन्दो
सकृदकृतविलम्बं देहि हस्तावलम्बम् ॥

—समाहर्तु रेतौ

२०३ दीनबन्धुरिति नाम ते स्म[र]न् यादवेन्द्र पतितोऽह[मु]त्सहे ।
भक्तवत्सल इति त्वयि श्रुते मामकं हृदयमाशु कम्पते ॥

—जगन्नाथदेवस्य

२०४ परमकारुणिको न भवत्परः परमशोच्यतमो न हि मत्परः ।
इति विचिन्त्य हरे मयि पामरे यदुचितं यदुनाथ तदाचर ॥

२०५ पातकप्रच[य]वन्मम तावत् पुण्यपुञ्जमपि राम लुनीहि ।
काञ्चनी भवतु लोहमयी वा मेखला यदि वदे(हे) न विशेषः ॥

२०६ सन्मार्गगामी यदि चेद् भवामि तवोपयोगः क्व दयालुतायाः ।
असत्पथे यातमनाथबन्धो भवाब्धिमग्नं परिपाहि राम ॥

२०७ अयि नाथ महत्तया मनः परमाणौ घटते न ते गतिः ।
तदिदं मन एव मामकं जगदाम्बन लम्बतां त्वयि ॥

२०८ लक्ष्मीवशीकरणचूर्णसहोदराणि
त्वत्पादपङ्कजरजांसि चिरं जयन्ति ॥
यानि प्रणाममिलितानि ललाटपट्टे
लुम्पन्ति देवलिखितानि दुरक्षराणि ॥

२०९ विधिर्विश्वं विश्वं सृजति तदिदं रक्षति हरिः
कथा पौराणीयं कथमपि न वैतथ्यमयते ।
तदन्तर्वर्तेऽहं यदि यदुपते तज्जितजितं
मयाऽवश्यं पाल्यो यदिह भवता त्वं मम पतिः ॥

२१० महामन्तुव्रातं तव तु विदधे यद्यपि सदा
तथापि श्रीविष्णो सततमनुकम्प्योऽस्मि भवता ।

वपुश्चापल्येन प्रखरनखरैः प्रव्यथयते
मृगेन्द्र[ः]कुप्येत् किं चपलनिजपोताय सदयः ॥

२११ अहल्या पाषाणः प्रकृतिपशुरेषा कपिचमू-
र्गुहश्चाण्डालोऽसौ समभवदमीषु त्रिषु कृपा ।
अहं चित्तेनाश्मा विषयविषभक्षयात् किल पशुः
श्वपाकश्चेष्टाभिः प्रभुवर कथं नोद्धरसि माम् ॥

२१२ प्रकृतिः पुनरस्माकं विस्मृतिस्तव पादयोः ।
अस्त्येकं शरणं राम शेषे तस्य विपर्ययः ॥

—केषामप्येते

२१३ न ध्यातोऽसि न कीर्तितोऽसि न मनागाराधितोऽसि प्रभो
नो जन्मान्तरगोचरे तव पदाम्भोजे च भक्तिः कृता ।
तेनाहं बहुदुःखभाजनतया प्राप्तो दशामीदृशीं
हे कारुण्यनिधे विधेहि करुणां श्रीकृष्ण दीने मयि ॥

—श्रीशङ्करस्य

२१४ भवोद्भवक्लेशकषा(शा)भिराहतः
परिभ्रमन्निन्द्रियकाननान्तरे ।
नियम्यतां माधव मे मनोहय-
स्त्वदङ्घ्रिशङ्कौ दृढभक्तिबन्धने ॥

२१५ नाम्नामकारि बहुतात्म(?)विशेषशक्ति-
स्तत्रार्पिता नियमितः स्मरणेन कालः ।
एतादृशी तव कृपा भगवन्ममापि
दुर्दैवमीदृशमिहाजनि नानुरागः ॥

—कयोरप्येतौ

२१६ श्रीकान्तकृष्णकरुणाकरकञ्जनाभ-
कैवल्यवल्लभमुक(कु)न्दमुरान्तकेति ।
नामावलीं कि(वि)मलमौक्तिकहारलक्ष्मी-
लावण्यपञ्चव(?)करीं करवाणि कण्ठे ॥

२१७ श्रीरामेति जनार्दने[ति]जगतां नाथेति नारायणे-
त्यानन्देति दयापरेति कमलाकान्तेति कृष्णेति च ।
श्रीमन्नाममहामृताब्धिलहरीकल्लोलमग्नं मुहु-
र्मुह्यन्तं गलदश्रुनेत्रमवशं मां नाथ नित्यं कुरु ॥
—लक्ष्मीधरपादानाम्

२१८ हे गोपालक हे कृपाजलनिधे हे सिन्धुकन्यापते
हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव ।
हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां
हे गोपीजननाथ पालय परं जानामि न त्वां विना ॥

२१९ श्रीनारायण पुण्डरीकनयन श्रीराम सीतापते
गोविन्दाच्युत नन्दनन्दन मुक(कु)न्दानन्त दामोदर ।
विष्णो राघव वासुदेव नृहरे देवेन्द्र चूडामणे
संसारार्णवकर्णधार भगवन् श्रीकृष्ण तुभ्यं नमः ॥

२२० भाण्डीरे शशिखण्डमण्डन वरश्रीखण्डलिप्ताङ्ग हे
वृन्दारण्यपुरन्दर स्फुरदमन्देन्दीवरश्यामल ।
कालिन्दीप्रिय [नन्द]नन्दन परानन्दारविन्देक्षण
श्रीगोविन्द मुकुन्द सुन्दरतनो मां दीनमानन्दय ॥

२२१ एकस्त्रेधा नयसुनिपुणैर्योगिभिः सेवकैर्वा
निर्बाधं यः सपदि विदितो भाति सर्वस्वरूपः ।
सोऽयं नन्दव्रजमुपगतः साकमाभीरवृन्दै-
र्व(वृ)न्दारण्ये विहरति परानन्दमूर्तिर्मुकुन्दः ॥

२२२ इन्दीवरोदरसहोदरमेदुरश्री-
वासो द्रवत्कनकवृन्दनिभं दधानः ।
आमुक्तमौक्तिकमनोहरहारवक्षाः
कोऽयं युवा जगदनङ्गमयं करोति ॥

२२३ विहाय कोदण्डशरान् मुहूर्तं
गृहाण पाणौ मणिचारुवेणुम् ।
मयूरवर्हाणि कुरूत्तमांसे
सीतापते त्वां प्रणमामि पश्चात् ॥

२२४ सच्छिद्रं त्यज वेणुमुन्नतगुणं चापं करे स्वीकुरु
त्यक्त्वा शृङ्गमिदं किलास्थिकलितं तूणीं सबाणीं श्रय ।
गोपत्वं प्रविहाय गोकुलपते भूपत्यमाविःकुरु
श्रीरामानुचरानतेर्यदिह ते वाञ्छा समुज्जृम्भते ॥

२२५ सातङ्कं पदमर्पितं स्खलति चेत(द)द्वैतसद्वर्त्मनि
प्रायेण श्रुतियष्टिरेव शरणं दुस्तर्कपङ्काकुले ।
साध्वीयं यदि न क्षमा जडधियः सन्तस्त[दा]लम्बनं
ते हि प्रेमगुणैर्दृढं नियमिताः कुत्रापि नीलाचले ॥

—केषामप्येते

२२६ अपारतरसंसारपारावारतितीर्षया ।
बहुधा वसुधापारभारहारं हरिं नुमः ॥

—श्रीनारायणगुरुचरणानाम्

२२७ किमर्थं व्यर्थं हा जठरभरणव्याकुलतया
दयाहीनान् हीनान् द्रविणमदपीनान् व्रजथ भोः ।
चिदानन्दाकारं धृतविमलहारं मृगदृशां
मनोहारं चित्ते कलयत कुमारं व्रजपतेः ॥

—हरिकवेः

२२८ नागविशेषे शेषेऽशेषेऽपि संहृते जगति ।
हंस्यसिकालं कालं का लङ्कालङ्घने स्तुतिर्भवतः ॥

२२९ देवाधिपो वा भुजगाधिपो वा नराधिपो वा यदि हैहयः स्याम् ।
सन्दर्शनं ते गुणकीर्तनं ते सेवाञ्जलिं ते तदहं विदध्याम् ॥

२३० स्वगोचरे चारय किं मदीया-
मुपेक्षसे गामपथे व्रजन्तीम् ।
यद् गोपिनाथ क्रियते मया य(त)न्न
चेतसाऽपि त्वयि वृत्तिभङ्गः ॥

२३१ कृष्ण त्वदीयपदपङ्कजपञ्जरान्तरद्यैव मे वसतु मानसराजहंसः ।
प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥

२३२ किं वा शेषे भुजगशयने रुक्मिणीकण्ठलग्नः
किं वा भुङ्क्ते रुचिरकवलैर्देवकीदत्तमन्नम् ।
किं वा दूरे स च खगपतिर्योगिभिः किं निरुद्धो
विश्वाधीश प्रकटय कृपां नावलम्ब्यो विलम्बः ॥

२३३ नो ददासि यदि तत्त्वधियं मे यच्छ मोहमपि तं रघुवीर ।
येन रावणचमूर्युधि मूढा त्वन्मयं जग[द]द(प)श्यदशेषम् ॥

*सर्वदेवप्रकीर्णकम्*

२३४ पर्णोज्जटस्य भवतो गृ[ह]वत्य[प]र्णा
स्थाणुः स्वयञ्च तव सूनुरसौ विशाखः ।
त्वत्तः फलं क इह वाञ्छति वामदेव
जन्मक्षयः परमसौ तव दर्शनेन ॥

२३५ वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न क्वापि क्षणमपि भवन्तं प्रणतवान् ।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिमान्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥

२३६ त्वयि सति शिव दातर्यस्मदभ्यर्थितानां
तिमिरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम् ।
चरमचरणपातैर्दुग्रहं दोग्धुकामाः
करभमनुसरामः कामधेनौ स्थितायाम् ॥

२३७ यद्यपि सुतो विशाखः प्रमदाऽपर्णा स्वयं स्थाणुः ।
तदपि शितिकण्ठ भवतश्छाया त्रैलोक्यतापमपनुदति ॥

२३८ स्वामिन् विश्वेश गङ्गा गिरिवरतनया या च काशीति तिस्रः
प्रेयस्यस्तासु काश्यामधिकतररुचिर्न द्वयोस्तत्किमेतत् ।
यस्मात्त्वत्साम्यभाजः शितिगरलगलान् भालनेत्रं प्रसूते
पुत्रानर्द्धेन्दुमौलीनपि च फणिधराद्गो गजास्यं षडास्यम् ॥

—केषामप्येते

*भवानी*

२३९ दैवाच्चेन्मणिकर्णिकापरिसरे मातर्म्रियेे तारकं
ब्रह्म व्याहरतो हरस्य गिरिजे त्वं मौलिमाच्छादय ।
नो चेन्म[न्]मुखकोष्णबाष्पविसरक्लिन्नेन्दुबिम्बस्खल-
त्पीयूषद्रवधारया बत मया भूयोऽपि जीविष्यते ॥

२४० सपर्यामाकीर्णां कतिपयगुणैः सादरमिह
श्रयन्त्यन्ये वल्लीं मम तु मतिरेवं विलसति ।
अपर्णैका सेव्या जगति लतिका यत्परिवृतः
पुराणोऽपि स्थाणुः फलति किल कैवल्यपदवीम् ॥

२४१ महान्तं विश्वासं तव चरणपङ्केरुहयुगे
निधायान्यन्नैवाश्रितमिह मया दैवतमये ।
तथापि त्वच्चेतो यदि न मयि जायेत सदयं
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥

२४२ भुजङ्गः प्रत्यङ्गं त्रिदशतटिनीतोयलहरी-
परिक्लिन्नो मूर्धा निरि(खि)लभुवि वह्नेः समुदयः ।
विषज्वाला कण्ठे श्वसिति स तथापि स्मरहरो
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥

—केषामप्येते

२४३ अये मातः प्रातः स्तवनजप[प]त्रावलिरुचो
दृगन्तास्ते यस्मिन् विदधति विलासव्यवस(सि)ति(त)म् ।
मणिज्योत्स्नाजालैर्जटिलवपुषस्तस्य नियतं
सहस्रं हेषन्ते हरमहिषि हर्म्येषु हरयः ॥

—सोमजिद्भट्टानाम्

२४४ गङ्गा महोदधिर्गङ्गा नोदधिः स महोदधिः ।
यदस्याः कोटिशो लोका भजन्ते चन्द्रमौलिताम् ॥

२४५ दोषत्रयाभिघाताय त्वयि मज्जति सज्जनः ।
त्वं करोषि चतुर्दोषं कथं गङ्गे न लज्जसे ॥

२४६ अच्युतचरणतरङ्गिणि शशिशेखरमौलिमालतीमाले ।
त्वयि तनुवितरणसमये हरता देया न मे हरिता ॥

२४७ अहिमकरे मकरगते मकरध्वजदहनशेखरे पयसि ।
मज्जन्नुषसि न मज्जति संश्रयति मकरालयं सुकृती ॥

२४८ मुक्ताभिः शुक्तिजीवैः कररुहवलयैः कच्छपैर्वा गजेन्द्रै-
र्भूषासम्बद्धहेमान्तरपदगतया लाक्षया वृक्षवर्गैः ।
प्राप्यन्ते मुक्त[ह ?]स्तैः सुरनदिसलिले पट्टकूलैश्च कीटैः
स्नाताभिः सुन्दरीभिः किमुत तनुभृतां ज्ञानभाजां वदामः ॥

—केषामप्येते

२४९ स्नातं तव प्रवाहे जन्तुं नयसि त्वमाशु निजपीठम् ।
इति किं कपर्ददुर्गे गङ्गे भीमेन रुद्धाऽसि ॥

२५० आराज्जनं जननि कञ्चिदपि प्रयातुं
मा देहि ते भवति दर्शनतः पिशाचः ।
विन्यस्य मूर्ध्नि भवतीं खलु जह्नुकन्ये
प्रेतप्रदेशमभियास्यति वीतवासाः ॥

—गोपीनाथपण्डितानाम्

२५१ अमुष्मिन् संसारे परिकलितसारेतरतया
तदा विद्योत्कर्षः परिणतिमुपैति श्रुतिविदाम् ।
यदा मन्दाकिन्या मधुरवमरालीकलकल-
प्रणालीवाचाले तटपरिसरे यान्ति दिवसाः ॥

२५२ आयुर्वायुव्यथितनलिनीपत्रमित्रं किमन्य-
च्छ(त्स)म्पच्छम्पाद्युतिसहचरी स्वैरचारी कृतान्तः ।
कस्मादस्मिन् भ्रमसि तमसि त्वं प्रयाहि प्रयागं
पौनःपुन्यं भुवि भगवती स्वर्धुनी ते धुनीते ॥

२५३ मा गर्वीरश्वमेधिन् मखकृदहमिति ब्रह्महन्मा च भैषीः
पातक्यस्मीति पुण्ये महति च दुरिते को मदः काऽत्र भीतिः ।
माघे मासि प्रयागे मकरगतरवौ मज्जतां सज्जनाना-
मब्बिन्दुर्वा धुनीते मदमपि भयमप्यत्र वेदाः प्रमाणम् ॥

—भेरीभाङ्कारस्यैते

२५४ यस्यामधोमज्जनमूर्ध्वगत्यै
यत्पङ्कलेपो विमलत्वसिद्ध्यै ।
यद्वारि संसारतरोः प्रशान्त्यै
नमोऽस्तु तस्यै मणिकर्णिकायै ॥

२५५ अञ्जनाकृतिरसौ निरञ्जना दारुणाऽपि रचिता न दारुणा ।
माद्दशा।पि कलिता न माद्दशा नीलशैलशिखरे हरेस्तनुः ॥

२५६ मा यात पान्थाः पथि भीमरथ्या
दिगम्बरः कोऽपि तमालनीलः ।
विन्यस्तहस्तोऽपि नितम्बबिम्बे
धूर्तः समाकर्षति चित्तवृत्तिम् ॥

२५७ जगद्विलक्षणेक्षणे क्षणे क्षणे मदीयकं
कदम्बकन्दुकद्वयं न गोपि गोपितं कुरु ।
इदं निगद्य राधिकापयोधरान्तरं हरन्
कलिन्दनन्दिनीतटे ननन्द नन्दनन्दनः ॥

२५८ घोषप्रघोषशमना यमथो गुणेन
मध्ये बबन्ध जननी नवनीतचोरम् ।
तद्बन्धनं त्रिजगतामुदराश्रयाणा-
माक्रोशकारणमहो नितरां बभूव ॥

२५९ उर्व्यां कोऽपि महीधरो लघुतरो दोर्भ्यां धृतो लीलया
तेन त्वं जगतीतले सुरगणैर्गोवर्धनो गीयसे ।
त्वां त्रैलोक्यधरं वहामि कुचयोरग्रे न तद् गण्यते
किं वा केशव भाषितेन बहुना पुण्यैर्यशो लभ्यते ॥

२६० आधायाध[र]पल्लवे मुरलिकामावृत्य कण्ठस्थलीं
गोपस्त्रीवदनाम्बुजेषु नितरां नेत्रालिमानर्तयन् ।
काष्ठं कन्दलयन् शिलाः सरसयन् निर्जीवमुज्जीवयन्
नादब्र[ह्म]णि मज्जयन् जगदिदं नन्दात्मजो गायति ॥

२६१ प्रातर्यास्यति माधवो मधुपुरीमित्थं मिथो जल्पितं
[कर्णा]कर्णिकयाऽऽकलय्य सहसा सर्वं सदा गोकुलम् ।
ऊरुन्यस्तकफोणि गण्डविलसत्पाणि प्रकामस्खलद्-
बाष्पश्रेणि पदाङ्गुलीविलिखितक्षोणि क्षणेनाभवत् ॥

—केषामप्येते

२६२ केषाञ्चिच्छितिकण्ठे वैकुण्ठे प्रीतिरन्येषाम् ।
मम तु द्वावपि तुल्यौ हस्तद्व[य]स्रोदकन्यायात् ॥

—गोपीनाथपण्डितानाम्

२६३ अहमिह धन्यान् मन्ये मधुमुरकंसादिकानसुरान् ।
ये निजनामनि खचिता गोपीहृदयहारिणा हरिणा ॥

—कस्यापि

२६४ त्रिभङ्गीसङ्गीतध्वनिभिरयमन्तः शिथिलय-
त्यमन्दं कन्दर्पज्वरमपहरत्येष विहरन् ।
अमुं दर्शं दर्शं जलदरुचिराकारमचिरा-
दकस्मा[दस्मा]कं नयनजनिसाफल्यमजनि ॥

—श्रीमधुसूदनसरस्वतीनाम्

२६५ भवित्री रम्भोरु त्रिदशवदनग्लानिरधु[ना]
स ते भर्ता रामो[1] न युधि पुरतो लक्ष्मणसखः ।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः ॥

—कस्यापि

२६६ महेश्वरे वा जगतां महेश्वरे
जनार्दने वा जगदन्तरात्मनि ।

---

१. स रामो मे स्थांता सु० र० भा० ।

तयोर्न भेदप्रतिपत्तिरस्ति मे
तथापि भक्तिस्तरुणेन्दुशेखरे ॥

—श्रीभर्तृहरेः

२६७ पुण्यं किन्नु पुरा महच्चकृमहे कैर्वीजिम प्राङ् मखैः
किं वा तेपिमहे महेश्वर तपः किं दानमातेनिम ।
गङ्गाद्यासु महानदीषु कियतो वारान् वयं सस्निम
श्रीकाशीश्वर यद् भवन्तमधुना प्रत्यक्षमीक्षामहे ॥

—कस्यापि

२६८ विहाय कमलालयाविलसितानि विद्युन्नटी-
विडम्बनपटूनि मे विहरणं विधत्तां मनः
कपर्दिनि कुमुद्वतीरमणखण्डचूडामणौ
कटीतटपटीभवत्करटिचर्मणि ब्रह्मणि ॥

—श्रीकालिदासकवेः

२६९ भजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसम्पदं प्रमथनाथ नाथामहे ।
भवद्भवनदेहलीविकटतुण्डदण्डाहति-
स्फुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ॥

—श्रीभवभूतेः

२७० अस्मिन् दक्षिणवातकम्पितरुश्रेणीपु(षु ?) रागोत्कर-
च्छिन्ने कोकिललोककूजितगुरौ जाते वसन्तोत्सवे ।
केचित्कुञ्चितकन्धरं मृगवधूनेत्राभिरामं दि(?)ता
मोदन्ते वयमिन्दुमौलिभजने भावं परं कुर्महे ॥

२७१ सम्भावयामि सततं शम्भोरम्भोरुहद्युति(म्) ।
चरणं करुणानन्दमधुस्यन्दनसुन्दरम् ॥

२७२ वंशो विश्वावतंसो जनुरनुपहतं स्वान्तमौन्नत्यकान्तं
लीला शीलानुकूला दलित[1]कलिमला काऽपि विद्याऽनवद्या ।
वाणी वीणारसानामखि(भि)नवयशसां[2] साधिका साधिका श्रीः
श्री[म]दुर्गौरीमयूरीमुदिर पुरह[र] त्वत्कृपाया विपाकः ॥

*अथ भवानीप्रकीर्णकम्*

२७३ कृशा कर्कशा केसरित्वग्व(ग्व्र)ताङ्गी
द्विषत्तर्जिनी गर्जिनी युद्धमध्ये ।
हसत्त्रासितारातिगर्वाऽतिचर्वा
करालानना कालिका पालिका मे ॥

२७४ जरीजृम्भदम्भोजिनीपुञ्जशङ्का
मिलन्मत्तमैलिन्दमालाजटालाः ।
किमन्यैरधन्यैरगण्यैरपुण्यैः
करिष्यन्ति नः शर्म कालीकटाक्षाः ॥

—अकब्बरीकालिदासस्येमौ

२७५ धनमहह न गेहे क्षुत्क्षमत्वं न देहे
न खलु गृहविरक्तिः स्वार्जने नास्ति शक्तिः ।
इह पुरि नहि दाता केवलं लोकमाता
मम शरणमिदानीमन्नपूर्णा भवानी ॥

२७६ उदयति तपनेऽपि यत्तमिस्त्रं
वद कुत एव दिनक्षपाविवेकः ।
भगवति यदि कर्म दुर्निवार्यं
तव चरणस्मरणेन साध्यते किम् ॥

---

१. क्षपित°; २. वेणीगुणानां समधिकयशसां सु० र० भां० ।

२७७ चिताभस्मालेपो गरलमशनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीं
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥

—केषामप्येते

२७८ परित्यक्ता देवाः कति कति न सेवाकुलतया
मया पञ्चाशीतेरधिकमपनीतेऽपि वयसि ।
इदानीमप्यन्तस्तव यदि न मातः सकरुणं
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥

—सुद(शङ्क?)राचार्यस्य

२७९ आनन्दलक्षणमनाहतनाम्नि देशे
नादात्मना परिणतं तव रूपमीशे ।
अन्तर्मुखेन मनसा परिचीयमानं
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥

२८० त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं
त्वं चेतनाऽसि पुरुषे पवने चलत्वम् ।
त्वं स्वादुताऽसि सलिले शिखिनि त्वमूषा
निःसारमेतदखिलं त्वदृते जगत् स्यात् ॥

—सोमजिद्भट्टानाम्

२८१ कियन्तो धीमन्तो मधुमथनसन्तोषणपराः
परे धन्याः शम्भोः शिवशिवपदाम्भोरुहरताः ।
महामोहावर्ते भवजलधिगर्ते निपततो
ममोद्धारे मातर्भगवति भवत्येव शरणम् ॥

२८२ अलं बलभिदङ्गनानिबिडनीविकाकर्षण-
क्वणत्कनककिङ्किणीमुखरितैरपि स्वःसुखैः ।

निरस्तविषयोद्यमा गुरुवचःप्रमालम्बिनी
दिगम्बरनितम्बिनी चरणचुम्बिनी चेन्मतिः ॥
—रुद्रकवेः

२८३ निर्जरीसदृशगूर्जरीदृशा [झ]र्झरीभवसि वर्ज्यरीतिमत् ।
चित्त चिन्तय चिराय चण्डिकां खण्डिकां प्रबलपातकश्रियः ॥

२८४ महान्तं विश्वासं तव चरणपङ्केरुहयुगे
निधायान्यन्नैवाश्रितमिह मया दैवतमुमे ।
तथापि त्वच्चेतो यदि न मयि जायेत सदयं
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥

२८५ सिञ्जत्काञ्चीकलापं सितकरकलिकाकल्पितोत्तंसरम्यं
कण्ठे कह्लारवन्तं कुसुमशरधनुःपाशरत्नाङ्कुशाढ्यम् ।
श्रीम[ज्]ज्वालाभिधानं कुचकलशतटीलिप्तकाश्मीरपङ्कं
तं कञ्चित्काञ्चिपूरं पुरहरमहिलावेषमन्वेषयामः ॥

२८६ गरुडासनकमलासनवृषभासनवन्द्यपादपद्मयुगाम् ।
अम्बां जगदवलम्बां वयमवलम्बामहे सततम् ॥

*अथ सत्कविप्रशंसा*

२८७ चर्चाभिश्चारणानां क्षितिरमणपरां प्राप्य सम्मोदलीला-
माकीर्त्तेः सौविदल्लानवगणय कविव्रातवाणीविलासान् ।
गीतं ख्यातं न नाम्ना किमपि रघुपतेरद्य यावत्प्रसादाद्
वाल्मीकेरेव धात्रीं धवलयति यशोमुद्रया रामभद्रः ॥
—श्रीमुरारेः

२८८ हर्तुर्याति न गोचरं किमपि शं पुष्णाति सर्वात्मना
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।

कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान् प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥

—श्रीभर्तृहरेः

२८९ क्वचिद् वस्तु स्फारं कतिपयपदैरर्पितगुणं
क्वचित् संक्षिप्तेऽर्थे प्रचुरवचनैरेव रचना ।
यथावाच्यं शब्दाः क्वचिदपि तुलायामिव धृता-
स्त्रिभिः कल्पैरेवं कविषु वृष(?)शब्दार्थनियमः ॥

—श्रीराजशेखरस्य

२९० अर्थान् केचिदुपासते कृपणवत् केचित्त्वलङ्कुर्वते
वेश्यावत् खलु धातुवादिन इवोद्बध्नन्ति केचिद् रसान् ।
अर्थालङ्कृतिसद्रसद्रवमुचां वाचां प्रसत्तिस्पृशां
कर्तारः कवयो भवन्ति कतिचित् पुण्यैरगण्यैरिह ॥

—श्रीराघवचैतन्यानाम्

२९१ मन्दं निक्षिपते पदानि परितः शब्दं समुद्वीक्षते
नानार्थाहरणञ्च काङ्क्षति मुदालङ्कारमाकर्षति ।
आदत्ते सकलं सुवर्णनिचयं धत्ते रसान्तर्गतं
दोषान्वेषणतत्परो विजयते चौरोपमः सत्कविः ॥

२९२ पुरो वा पश्चाद् वा वयमुपविशामः क्षितिभुजां
तदा[२] किं नश्छिन्नं वचनरचनाक्रीतजगताम् ।
अगारे कान्तारे कुचकलशहारे[३] मृगदृशां
मणेस्तन्मूल्यं स्यात्सहजसुभगस्तद्द्युतिभरः[४] ॥

—केषामप्येते

१. प्रशस्ति° सु० र० भा० । २. ततः ३. °भारे ; ४. मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः सु० र० भा० ।

२९३ साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती ।
शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरावृता[1]
भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिः सुभ्रुवः[2] ॥

—सोमकवेः

२९४ येषां कोमलकाव्यकौशलकलालीलावती भारती
तेषां कर्कष(श)तर्कवक्रवचनोद्गारे न किं हीयते ।
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिताः
किं तैर्मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥

—श्रीजयदेवस्य

२९५ त्वञ्चेन्नीचजनानुरागरभसादस्मासु मन्दादरः
का नो मानद मानहानिरियता[3] भूः किं त्वदेकप्रभुः ।
गुञ्जापुञ्जपरम्परापरिचयाद् भिल्लीजनैरुज्झितं
मुक्तादाम न धाम धारयति किं[4] कण्ठे कुरङ्गीदृशः ॥

—कस्यापि

२९६ सभाशोभां दातुं कथमपि दुरूहं परमनः
परिज्ञातुं वक्तुं जगदघहरां सूक्तिसरणिम् ।
श्रियं प्राप्तुं मङ्क्तुं विबुधजनचेतोजलनिधौ
कवित्वानां कर्ता भुवनभयहर्ता[पि] निपुणः ॥

२९७ कविरविमहोत्कर्षान् हर्षान् प्रपञ्चय पञ्चषान्
स्खलसि रसने किं वा सर्वान् प्रवक्तुमनीश्वरे ।
गणयति यद्प्येतान् धाता दिनावलिमालया
तदपि भगवानेषामन्तं कदापि न विन्दति ॥

---

१. °रास्तृता; २. रतिर्योषिताम् सु० र० भा० । ३. °रियती;
४. न धारयन्ति किमहो सु० र० भा० ।

२९८ इहान्ये ते विप्राः प्रतिसदनमागत्य कृपणाः
कणान् याचन्ते ये प्रतिगणितनक्षत्रतिथयः ।
वयं कार्णाटीनां कुचकलशपत्राङ्कुरलता-
विलासव्यासङ्गोल्लसितमनसः केऽपि कवयः ॥

—हरिकवेर्ममैतौ

२९९ भासो रामिलसौमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
र्मेण्ठो भारविकालिदासतरलाः स्कन्दः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती यदि भवेत् के तस्य सर्वेऽपि ते ॥

३०० शीलाविज्ञामारुलामोरिकाद्याः
काव्यं कर्तुं सन्ति(न्तु)विज्ञाः स्त्रियोऽपि ।
विद्यां वेत्तुं वादिनो निर्विजेतुं
दातुं वक्तुं यः प्रवी(वी)णः स वन्द्यः ॥

—श्रीधनदस्य

३०१ सीमन्तिन्यः प्रगल्भाः स्मरसमरकलाकौप(श)लप्रक्रियायां
सम्भोगक्लान्तकान्ताकुचकलशलसत्स्वेदलोपे समीराः ।
आश्लिष्यद्भोगिभोगानलसहनविधौ शाखिनश्चन्दनानां
काव्यश्रेणीविचारे कतिचन कवयो दक्षिणा दाक्षिणात्याः ॥

३०२ कवयः कवयन्तु तैल(र)भुक्ताः
सरसा एव परन्तु दाक्षिणात्याः ।
अपि लोचनचञ्चला हरिण्यो
मदिराद्या न समाः कटाक्षपातैः ॥

—कस्यापि

३०३ उदीरितोऽर्थः पशुनाऽपि गृह्यते
हयाश्च नागाश्च वहन्ति नोदिताः ।
अनुक्तमप्यूहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धयः ॥

—श्रीभर्तृहरेः

३०४ महीपतेः सन्ति न यस्य पार्श्वे
कवीश्वरास्तस्य कुतो यशांसि ।
भूपाः कियन्तो न बभूवुरुर्व्यां
नामापि जानाति न कोऽपि तेषाम् ॥

—विल्हणस्य

३०५ विद्यावतां दातरि दैन्यता चेत् किं भारतीविभ्रमवैभवेन ।
दैन्यं यदि प्रेयसि सुन्दरीणां धिक् जीवितं तत्कुसुमायुधस्य ॥

३०६ यद्यपि भवति विरूपो वस्त्रालङ्कारवेषपरिहीन(णः) ।
तदपि सभाजनमध्ये भ्राजति विद्याधिकः पुरुषः ॥

—कयोरप्येतौ

३०७ कवीनां मानसं नौमि तरन्ति प्रतिभाम्भसि ।
यत्र हंसवयांसीव भुवनानि चतुर्दश ॥

—श्रीराजशेखरस्य

३०८ कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति ।
कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रकरः ॥

—शङ्खधरस्य

३०९ कविवाक्यामृततीर्थस्नानैः पूता भृशं यशोदेहाः ।
येषां त एव भूपा जीवन्ति गता[1] वृथैवान्यै(न्ये) ॥

—शार्ङ्गधरस्य

३१० पदविद्धत्ता क्वापि स्पृहणीया भवति सत्कवीन्द्राणाम् ।
घनजघनस्थलमण्डलभारालसकामिनीनाञ्च ॥

—मदनस्य

३११ ते धन्यास्ते महात्मानो येषां लोके स्थितं यशः ।
ये निबध्नानि (ध्नन्ति) काव्यानि यें (ये) च काव्येषु कीर्तिताः ॥

३१२ अक्षराणि परीक्षध्वमम्बराडम्बरैरलम् ।
शम्भुरम्बरहीनोऽपि सर्वज्ञः किन्न कथ्यते ॥

—कयोरप्येतौ

*विशिष्टकविप्रशंसा*

३१३ भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वनद्-
वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा कविः[2] ।
पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किम-
प्याकल्पं कविनूतनाम्बुदमयी कादिं(द)म्बिनी वर्षति ॥

—श्रीजयदेवस्य

३१४ श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः ।
तमहमरागमकृष्णं[3] कृष्णद्वैपायनं वन्दे ॥

—कस्यापि

---

१. मृता सु० र० भा० । २. मुनिः सु० र० भा० ।
३. °मतृष्णं सु० र० भा० ।

३१५ स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः ।
आदौ व्याकरणं काव्यमनु जाम्बु(म्ब)वतीजयम् ॥

—श्रीराजशेखरस्य

३१६ सम्यग्[1] बाणद्वितीयेन नमदाकारधारिणा ।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥

—श्रीत्रिविक्रमस्य

३१७ कवयः कालिदासाद्याः कवयो वयमप्यमी ।
पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥

—कृष्णभट्टस्य

३१८ पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाऽधिष्ठितकालिदासा ।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥

—कस्यापि

३१९ अहो मे सौभाग्यं मम च भवभूतेश्च भणितिं
तुलायामारोप्य प्रतिफलति तस्यां लघिर्मान ।
गिरां देवी साक्षाच्छ्रुतिकलितकह्लारकणिका
मधूलीमाधुर्यं क्षिपति परिपूर्त्यै भगवती ॥

—कालिदासस्य

३२० रे गोदावरि देवि तावकतटोत्सङ्गे पुलिन्दः कवि-
र्वाग्देवीं बहुदेशदर्शनसखीं हित्वा निवृत्तिं गतः ।
एनां सागरमध्यसुप्तमुरभिन्नाभीसरोजाश्रयं
ब्रह्माणं गमयत्वहो कथमसावेकाकिनी स्थास्यति ॥

—पुलिन्दस्य

---

१. शश्वद् सु० र० भा० ।

३२१ श्लेषे केचन शब्दगुम्फविषये केचिद् रसे चापरेऽ-
लङ्कारे कतिचित् सदर्थविषये चान्ये च जातौ परे।
आः सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-
सञ्चारे[1] कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः॥

श्रीचन्द्रदेवस्य

३२२ द्यौर्वाचस्पतिनेव पन्नगपुरी शेषाहिनेवाभवद्
येनैकेन विदुष्मती वसुमती मुख्येन संख्यावताम्।
सोऽयं व्याकरणार्णवैकतरणिश्चातुर्यचिन्तामणि-
र्जीयात् कोविदगर्वपर्वतपविः श्रीबोपदेवः कविः॥

श्रीबोपदेवपण्डितानाम्

३२३ अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः।
देवीं वाचमुपासते तु बहवः सारं तु सारस्वतं
जानीते सुतरामसौ गुरुकुलक्लिष्टो मुरारिः कविः॥

—श्रीमुरारेः

३२४ वाग्देवी किमु वाक्पतिः किमु किमु व्यालः सहस्रानन:
किं देवश्चतुराननः समुदितो भूलोकमालोकितुम्।
किं वा सप्त[ति]शास्त्रकल्पकुश[लः]प्रोद्दामविद्वन्मत-
क्षत्रच्छत्रविरामरामपरशुर्लोलिम्बराजः कविः॥

३२५ बिन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं
कर्मेतिक्रमशिक्षितान्वयकथा[2] ये केऽपि तेभ्यो नमः।

---

१. °री सु० र० भा०। २. °प्रतिबोधितान्वयविदो सु० र० भा०।

ये तु ग्रन्थसहस्रपा(शा)णकषणत्रुट्यत्कलङ्कै[र्]गिरा-
मुल्लेखैः कवयन्ति बिल्हणकविस्तेष्वेव सन्नह्यते¹ ॥

—बिल्हणस्य

३२६ आमूलाद् रत्नसानोर्मलयवलयितादा च कूलात् पयोधे-
र्यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरी भाग्यभाजां
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः ॥

—पण्डितराजस्य

३२७ वितण्डाहेत्वाद्यैरतिविततवाक्यैरपि नृभि-
र्न जेयोऽसौ विद्वज्जनसदसि गङ्गाधरबुधः ।
पुरारिप्रो[च्] चञ्चज्जटिलकुटिलोद्धूनितशिर-
स्तटिन्यम्भःपूरोपमवचनवाचालि[त]मुखः ॥

—तस्यैव

३२८ येनैकः कवितावतारसमये ग्रन्थः समुल्लासित-
स्तस्या एव सुविश्रमे पुनरहो बन्धः परो निर्मितः ।
तस्या लास्यविधौ कृतास्तु बहवस्ते ते प्रबन्धोत्तमाः
सोऽयं कोऽपि हरिः कविः कविरविज्योतिः कणो दीव्यति ॥

—हरिकवेर्ममायम्

३२९ श्लाघ्य(घ)न्ते महिमानमत्र कवयः स्वीयं न दृष्टान्तराः
के के काव्यकराः परन्तु गरिमा श्रीचक्रपाणेर्गुरुः ।
बिम्बद्वेषिदले यदास्यकमले क्षोदाभदन्तामले
वाग्देवी कमलेव विश्वहृदयप्रह्लादिनी खेलति ॥

—मत्कनिष्ठभ्रातुश्चक्रपाणिकवेः

---

१. °ह्यति सु० र० भा० ।

३३० वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन-
स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः ॥

—श्रीजयदेवस्य गीतगोविन्दकृतः

३३१ कुन्दावदातयशसा जगदेव लब्धं
साध्वी पथं गतवती कविता नताङ्गी ।
स्वर्लोकगामिनि गुरौ जयदेवमिश्रे
रे तर्क कर्कश न कोऽपि तवास्ति पन्थाः ॥

—कण्टकोद्धारस्य

३३२ मयि स्थिते वादिनि नागदेवे नैकाक्षरं वेत्ति महेश्वरोऽपि ।
उद्यम्य बाहू परिरारटीमि यस्यास्ति शक्तिः स तु वावदीतु ॥

—तस्यैव

३३३ फणिमुखसहस्रचलितामुद्वेलितसागरावगताम् ।
वाग्गङ्गामिह वहतां गङ्गाधरता किलोचिता भवताम् ॥

—हरिकवेर्ममायम्

३३४ अपशब्दशतं माघे भारवीये शतत्रयम् ।
कालिदासे न गण्यन्ते कविरेको धनञ्जयः ॥

—धनञ्जयस्य

३३५ ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना ।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ॥

३३६ सरस्वतीव कार्णाटी विजयाङ्का जयत्यसौ ।
या वैदर्भगिरां वासः कालिदासादनन्तरम् ॥

३३७ सूक्तीनां स्मरकेलीनां कलानाञ्च विलासभूः ।
प्रभुदेवी कविर्लाटी गताऽपि हृदि तिष्ठति ॥

३३८ तौ शूद्रककथाकारौ रम्यौ रामिलसोमिलौ ।
काव्यं ययोर्द्वयोरासीदर्द्धनारीश्वरोपमम् ॥

३३९ मा स्म सन्तु हि चत्वारः प्रायो रत्नाकरा इमे ।
इतीव सत्कृतो धात्रा कविरत्नाकरोऽपरः ॥

३४० मयूरादसमो जज्ञे मान्यः कुलिचुरिः कविः ।
उदन्वतः समुत्तस्थुः कति वा तुहिनांशवः ॥

३४१ द्विसन्धाने निपुणतां सताञ्चक्रे धनञ्जयः ।
यया जातं फलं तत्र स तां चक्रे धनञ्जयः ॥

३४२ यायावरकुलश्रेणेर्हारयष्टेश्च मण्डनम् ।
सुवर्णबन्धरुचिरस्तरलस्तरलो यथा ॥

—राजशेखरस्यैते

३४३ अथो गणपतिं वन्दे महामदविधायिनम् ।
विद्याधरमणेर्यस्य पूज्यते कण्ठगर्जितम् ॥

३४४ प्रद्युम्नान्नापरस्येह नाटके पटवो गिरः ।
प्रद्युम्नान्नापरस्येह पौष्पा अपि शराः खराः ॥

—तस्यैवैतौ

३४५ जाते जगति वाल्मीकौ शब्दः कविरिति स्थितः ।
व्यासे जाते कवी चेति कवयस्त्वयि दण्डिनि ॥

—श्रीकालिदासस्य

३४६ माघं भवतु माघस्य भा रवेरस्तु भारवेः ।
काव्यव्याजेन चक्रान्तां (क्रांते ?) केशवेशानयोः स्तवम् ॥
—कस्यापि

३४७ माघेन विघ्नतोत्साहा न सहन्ते पदक्रमम् ।
स्मरन्ति भारवेरेव कवयः कपयो यथा ॥
—धनपालस्य

३४८ पार्थस्य मनसि स्थानं लेभे खलु सुभद्रया ।
कवीनाञ्च वचोवृत्तिचातुर्येण सुभद्रया ॥
—सुभद्राया[ः]

३४९ प्रकृत्यैवातिवक्रेण गुणदैर्घ्यं वितन्वता ।
मया शरासनेनेव बाणो दूरं निरस्यते ॥
—लोष्ठ(ष्ट!)सर्वस्य

३५० नीलोत्पलदलश्यामां विज्जिकां मामजानता ।
वृथैव दण्डिना प्रोक्ता सर्वशुक्ला सरस्वती ॥
—विज्जायाः

३५१ मुरारिपदचिन्तायां भवभूतेस्तु का कथा ।
भवभूतिं परित्यज्य मुरारिमुररीकुरु ॥

३५२ कविरमलः कविरचलः कविरभिनन्दश्च कालिदासश्च ।
अन्ये कवयः कपयश्चापलमात्रं परं दधति ॥

*सत्कविप्रशंसा, कुकविनिन्दा*

३५३ निकूत(?)प्रस्यूतप्रतनुपटखण्डोपमपद-
प्रकीर्णां वाक्कन्थां कति कति न गुम्फन्ति कवयः ।
परे वर्ण्यन्ते ते यदमलपदस्तोमरचना-
झणत्कारोद्गारो विबुधहृदयान्युज्ज्वलयति ॥

३५४ हठादाकृष्टानां कतिपयपदानां रचयिता
भवेत्स्पर्धालुश्चेदहह कविना वश्यवचसा ।
भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥

—कयोरप्येतौ

३५५ सत्यं सन्ति गृहे गृहेषु कवयो येषां वचश्चातुरी
स्वे हर्म्ये कुलकन्यकेव लभते जातैर्गुणैर्गौरवम् ।
दुःप्रापः स तु कोऽपि कोविदपतिर्यद्वाग्रसग्राहिणां
पण्यस्त्रीव कलाकलापचतुरा चेतांसि हर्त्तुं क्षमा ॥

—श्रीरुद्रभट्टस्य

३५६ वरं दरिद्रोऽपि हि शास्त्रपारगो
न चार्थवान् यः खलु शास्त्रवर्जितः ।
सुलोचना स्थूलपटा विराजते
न नेत्रहीना कनकाद्यलङ्कृता ॥

३५७ नीचोऽनक्षरकुक्षिरुद्धततया वैकुण्ठमप्याक्षिपन्
भेरीवन्मुखरीकरोति परितो वाग्डम्बरं डम्बरम् ।
प्राज्ञस्त्वज्ञ इवाविभावितनिजाकारो [भ]जन्नार्जवं
मन्दं मन्दमनुक्षरत्यवसरे वीणेव वाणीगुणान् ॥

३५८ वैयाकरणनरेन्द्रादपशब्दमृगाः क्व यान्ति वित्रस्ताः ।
नटविटगणकच्छान्दसभिषगाननकाननानि यदि न स्युः ॥

३५९ परितुष्यन्ति महान्तः काव्यैः सुकुमारमधुरसुश्लिष्टैः ।
कटपटवकोटकीटकभटवटतुल्योद्भटैरपरे ॥

—वल्ल[भ]देवस्य

३६० सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे ।
उत्पादका न बहवः कपयः स(श)रभा इव ॥

—बाणस्य

३६१ गीतशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥

*कुकविजडनिन्दा*

३६२ गाहन्ते कविचक्रवर्तिपदवीमेकेऽबुधाः पञ्चपैः
श्लोकैरेव महाश्रमेण घटितैर्यत्तल्ली(लघी?)यः फलम् ।
तादृक् चेन्मनसोऽवरोधकलया ध्यायन्ति चेदीश्वरं
तत्तेषां कर एव किं न विलसन्त्यष्टौ महासिद्धयः ॥

—श्रीहरिहरस्य

३६३ स्वाधीनो रसनाञ्चलः परिचिताः शब्दाः कियन्तः क्वचित्
क्षोणीन्द्रो न नियामकः परिषदः शान्ताः स्वतन्त्रं जगत् ।
तद् यूयं कवयो वयं वयमिति प्रस्तावनाहङ्कृति-
स्वच्छन्दं प्रतिसद्म गर्जत, वयं मौनव्रतालम्बिनः ॥

—उमापतिधरस्य

३६४ ये संसत्खरवादिनः परयशःपूरेण शूलान्विताः[1]
कुर्वन्ति स्वगुणस्तवेन गुणिनां यत्नाद् गुणाच्छादनम् ।
तेषां रोषकषायितोद्रदृशां कोपा(पो)ष्णनिःश्वासिनां
दीप्ता रत्नशिखेव कृष्णफणिनां विद्या जनोद्वेजिनी ॥

३६५ ग्रीवास्तम्भभृतः परोन्नतिकथामात्रे शिरःशूलिनः
सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूताः क्षितेः[2] ।

---

१. ये संसत्सु विवादिनः परयशः शूलेन शल्याकुलाः सु० र० भा० ।
२. °भूतस्थितेः;

अन्तर्द्वेषविषप्रवेष(श)विषमक्रोधोष्णनिःश्वासिनो
दृष्ट्वा[1] नूतनपण्डितस्य विकृतिर्भ्रामज्वरारम्भभूः ॥

—क्षेमेन्द्रस्यैतौ

३६६ व्यासादीन् कविपुङ्गवाननुचितैर्वाक्यैः सलीलं हसन्
प्रोच्चैर्जल्पति मीलिताक्षयुगलं श्लोकान् सगर्वं पठन् ।
काव्यं धिक्कुरुते परैर्विरचितं स्पर्द्धश्च सार्धं बुधै-
र्यश्चाप्यर्थयते श्रुतेऽनवहितः पाण्डित्यमाप्नोति किम्[2] ॥

—कस्यापि

३६७ न नित्यं पाण्डित्यं विलसति शयाक्षेपसहित-
प्रचण्डाभिर्वाग्भिर्गलदलनमुक्ताभिरभितः ।
समर्थैरत्यर्थैर्लसति कमनीयैः कतिपयै-
र्वचोभिर्वैदग्ध्यं विबुधहृदयानन्दज[न]नैः ॥

—हरिकवेर्ममायम्

३६८ द्राघीयसा[धा़र्ष्ट्य?]गुणेन युक्ताः
कैरप्यपूर्वैः परकाव्यखण्डैः ।
आडम्बरं ये वचसां वहन्ति
ते केऽपि कन्थाकवयो जयन्ति ॥

—हरिहरस्य

३६९ काव्यं करोषि किमु ते सुहृदो न सन्ति
ये त्वामुदीर्णपवनं विनिवारयन्ति ।

---

१. कष्टा; नूनमप° सु० र० भा० । २. सु० र० भा० सम्पूर्णं पद्यमेवं निर्दिशति—

व्यासादीन् कविपुङ्गवाननुचितैर्वाक्यैः सलीलं सह-
न्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान् सगर्वं पठ ।
काव्यं धिक्कुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधै-
र्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥

गव्यं घृतं पिब निवातगृहं प्रविश्य
वाताधिका हि पुरुषाः कवयो भवन्ति ॥

—हरिहरस्य

३७० किं कोकिलि(ल)स्य विरुतेन गते वसन्ते
किं कातरस्य बत शस्त्रपरिग्रहेण ।
मित्रेण किं व्यसनकालपराङ्मुखेन
किं जीवितेन पुरुषेण निरक्षरेण ॥

३७१ गन्तव्यमस्तु तव वेद वयस्य दूरं
रे तर्क कर्कश तवापि ततोऽपि दूरम् ।
रे नव्यकाव्य तव[च?]व्यसनं(?)जनानां
गप्पी परिस्फुरति यत्पुरतो नृपाणाम् ॥

३७२ साहित्यसङ्गीतरसानभिज्ञास्ते धेनुजाः पुच्छविषाणहीनाः ।
बुभुक्षिताः किं न तृणं चरन्ति तद् भागधेयं हि परं पशूनाम् ॥

३७३ अन्तःसारविहीनानां बुधाद् बोधो न जायते ।
मलयाचलसंसर्गान्न वेणुश्चन्दनायते ॥

३७४ यस्य नास्ति स्वयं प्रज्ञा तस्य शास्त्रं करोति किम् ।
लोचनेन विहीनस्य दर्पणः किं करिष्यति ॥

—केषामप्येते

३७५ अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥

—भर्तृहरेः

३७६ गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं न चार्थस्य ।
रसिकत्वेनाकुलिता वेश्यापतयः कुकवयश्च ॥

—अ(क)स्यापि

३७७ अप्र[ग]ल्भाः पदन्यासे जननीरागहेतवः ।
सन्त्यं(न्त्ये)के बहुलालापाः कवयो बालका इव ॥

—केषामप्येते

३७८ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्माऽपि[तं]नरं न रञ्जयति ॥

—भर्तृहरेः

*अथ कविकर्मप्रशंसा*

३७९ प्रसत्तेर्यः पात्रं तिलकयति यं सूक्तिरचना
य आद्यः स्वादूनां श्रुतिचुलकलेह्येन वपुषा ।
यदात्मानो विद्याः परिणमति यश्चार्थवपुषा
स गुम्फो वाणीनां कविवृश(ष)निशे(षे)व्यो विजयते ॥

—श्रीराजशेखरस्य

३८० केयूरा न विभूषयन्ति पुरुषं हारं(रा)च(न)चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्द्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥

३८१ किं हारैः किमु कङ्कणैः किमसमैः कर्णावतंसैरलं
केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः ।
पुंसामेकमखण्डितं पुनरिदं मन्यामहे भूषणं[1]
यन्निःपीडितपार्वणामृतकरस्यन्दोपमाः सूक्तयः ॥

—कस्यापि

---

१. मण्डनं सु० र० भा० ।

३८२ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नमु(गु)प्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥

—भर्तृहरेः

३८३ आनन्दं समुदश्नयत्यलमलं लोकं विशोकं करो-
त्युद्बोधं परिबोधयत्यतितरामज्ञं विधत्ते बुधम् ।
आपज्जालमपाकरोत्यतिलघुं विश्वैकवन्द्यं करो-
त्यंहः संहरति श्रियं वितनुते विद्या प्रदद्याद् यशः ॥

—हरिकवेर्ममायम्

३८४ मातेव रक्षति पितेव हिते नियुंक्ते
कान्तेव चाभिरमयत्यपनीय दुःखम् ।
कीर्तिं च दिक्षु वितनोति तनोति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या ॥

३८५ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुक(त्त)मम् ।
आ(अ)हार्यत्वदनर्घत्वादक्षयत्वाच्च सर्वदा ॥

३८६ सुभाषितरसास्वादजातरोमाञ्चकञ्चुकाः ।
विनाऽपि कामिनीसङ्गं कवयः सुखमेधते ॥

—कस्यापि

३८७ क्लान्तमपोहति खेदं तप्तं निर्वाति बुध्यते मूढम् ।
स्थिरतामेति च सङ्कुलमुपयुक्तसुभाषितं चेतः ॥

३८८ संसदि तदेव भूष[ण]मुपकारकमवसरे धनं मुख्यम् ।
सूक्तं दधति सुवर्णं कल्याणमनर्घमिह धन्याः ॥

—कस्यापि

३८९ कथमिह मनुष्यजन्मा प्रविशति संसदि[1] विबुधगमितायाम् ।
येन न सुभाषितामृतमाह्लादि निपीतमातृप्तैः ॥

३९० सुभाषितमयद्रव्य[2]सङ्ग्रहं न करोत्य(ति) यः ।
स वै प्रस्तावयज्ञेषु कां प्रदास्यति दक्षिणाम् ॥

—चाणक्यस्य

३९१ वनजलधिमहीभृत्सिंहमातङ्गपूर्वो
भवति पुरुषभीमः प्रेक्षितो भाववर्गः ।
ननु भवति स एव प्रीतिहेतुः कुतोऽपि
श्रुतिपथमुपनीतः सूक्तिभिः सत्कवीनाम् ॥

—सूक्तिसहस्रात्

३९२ अविदितगुणाऽपि सत्कवि-
भणितिः कर्णेषु किरति मधुधाराम् ।
अनधिगतपरिमलाऽपि हि
हरति दृशं मालतीमाला ॥

—सुब[न्]धोः

३९३ नृपतिसभासरसी परितः पूर्णाऽपि जडैर्न कान्तिमुद्वहति ।
मुखकमलानि न यस्यां सूक्तालिक्वणितमधुराणि ॥

—वल्लभदेवस्य

३९४ श्रुतसम्पदः कवीनामुक्तिभिरेव प्रकाशतां यान्ति ।
सिन्धोरपारजलभरमुद्गारा एव कथयन्ति ॥

—तस्यैव

३९५ प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः ।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥

---

१. सम्प्रविशति सदसि सु० र० भा० । २. °मयैर्द्रव्यैः सं०; सोऽपि सु० र० भा० ।

३९६ काव्यमय्यो गिरो यावच्चरन्ति विष(श)दा भुवि ।
तावत्सारस्वतं स्थानं कविरासाद्य तिष्ठति ॥

—कयोरप्येतौ

३९७ याता यान्ति च यातारो लोकाः शोकाधिका भुवि ।
काव्यसम्बन्धिनी कीर्तिः स्थायिनी निरपायिनी ॥

—अनन्तदेवानाम्

*विशिष्टकाव्यप्रशंसा*

३९८ पातुं श्रोत्ररसायनं रचयितुं वाचः सतां सम्मता
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वाद(द्व) फलं च जीवित[त]रो[र्]यद्यस्ति ते कौतुकं
तद् भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥

—श्रियङ्करवर्मणः

३९९ किं वीणाक्वणितेन किं मधुकरीझङ्कारितेनापि किं
कन्दर्पायुधसिञ्जितेन तरुणीहुङ्कारितेनापि किम् ।
श्रीमच्छित्तिपसत्कवेर्यदि वचो हेरम्बकुम्भस्थली-
मुक्ताम्भःसुभगं सुधासहचरं कर्णोदरं गाहते ॥

—छित्तिपस्य

४०० किं कान्तामणिमेखलाकलकलै[ः]किं कोकिलाकूजितैः
किं भृङ्गीमदमञ्जुगुञ्जितभरैः किं केलिकेकिस्वरैः ।
दैवाच्चेद् विहरन्ति कर्णकुहरं फुल्लारविन्दद्रव-
रसान्द्रानन्दमरन्दबिन्दुमधुरा लोलिम्बराजोक्तयः ॥

—कविचूडामणेः

४०१ तावन्मञ्जु विलासिनां विलसितं तावत्सुधा बन्धुरा
तावन्नन्दति चन्दनाम्बुनि परीतापापनोदप्रथा ।

तावत्कोकिलकूजितेषु कमला यावन्न दिङ्मण्डली-
माक्रामन्ति मुक(कु)न्दपण्डितकवेः कुन्दावदाता गिरः ॥

—मुक(कु)न्दभट्टस्य

४०२ यद्वाणी वाणिनीनां मधुरमधुरसद्रोहिणी रौहिणेयः
श्रुत्वा हालावहेलां रचयति सुचिरं सम्मदाकुञ्चिताक्षम् ।
किञ्चिद्द्राक्षासदक्षाक्षररसनकरस्रस्तरूद्राक्षमालः
सोत्कण्ठं नीलकण्ठोऽप्यनुपठति शिरस्ताण्डवाडम्बरेण ॥

४०३ मौलं(ले?)मन्दारदामभ्र[म]दलिपटलीकाकलीं श्रोणिबिम्बे[श्]
चञ्चत्काञ्चीनिनादं चरणकमलयोर्मञ्जुमञ्जीरसिञ्जाम् ।
उत्सङ्गे कीरगीतं स्तनभुवि मसृणं क(व)ल्लकीपञ्चनं वा
तत्काव्ये दत्तकर्णा शिव शिव मनुते भारती भारमेव ॥

४०४ यः पीयूषमयूखधामनि सुधासाराच्छकच्छेऽपि यः
क्षुभ्यत्क्षीरसमुद्रसान्द्रलहरीलावण्यपूरेऽपि यः ।
यः कान्ताधरपल्लवे मधुरिमा नासौ समुद्गाहते
श्रीविद्वत्कविकृष्णपण्डितवचोवीचीसमीचीनताम् ॥

—श्रीकृष्णपण्डितानामेते

४०५ शरज्ज्योत्स्नाकारा मधुरमधुराः सूक्तिलहरी-
परीरम्भोदाराः कठिनहृदयद्रावचतुराः ।
जयन्ति स्वच्छन्दाः सकलजगदानन्दजनका
महामायास्तन्यप्रभवविभवाः शङ्करगिरः ॥

४०६ श्राव्यः श्रावणकेकिकूजनकलालीलाविलासादपि
स्वादुः स्वात्यमलाम्बुदावलिगलत्पीयूश(ष)पूरादपि ।
हृद्यः स्विद्यदमन्दवामनयनावक्त्रादपि श्रूयते
त्रैलोक्ये किल रामचन्द्रवचसां लोकोत्तरः प्रक्रमः ॥

४०७ श्रीनारायणपादपङ्कजरजःपुञ्जप्रसङ्गादियं
वाणी विश्वविमोहिनी हरिकवेः कण्ठात्समुन्मीलति ।
यामापीय सुधानिधानकलशीसम्बन्धिबिम्बाधराः
स्वर्बालाः परिशीलयन्ति न बुधाः सानन्दमुत्कण्ठिताः ॥

४०८ गौराङ्गीकलगीतपञ्चमसुधावेणीतिरस्कारिणी-
र्निर्यत्पार्वणचन्द्रमोऽन्तरकरश्रेणीरसाग्राहिणीः ।
मन्दारप्रकरद्रवन्नवरसद्रोणीमदद्रोहिणीः
पुष्णन्तीः पिब सम्मदं हरिकवेर्वाणीर्मनोहारिणीः ॥

४०९ ज्ञातुं काव्यरहस्यमाकलयितुं लोकोत्तरं कौशलं
सन्दर्भं परिचेतुमद्भुततरं मुं(मं)क्तुं रसाम्भोनिधौ ।
कर्तुं कान्तकवित्वकोटिरचनां यद्यस्ति वः कौतुकं
तत्सन्तः पिबतामलानि मधुना सिक्तानि सूक्तानि नः ॥

—हरिकवेर्ममैते

*अथ सत्यकाव्यप्रशंसा*

४१० शाणोत्तीर्णमिव ज्वलद्द्युतिपदं बन्धोऽर्धनारीश्वर-
श्लाघालङ्घनजाङ्घिको विदलितोद्भिन्नेव चार्थोद्गमः(?)।
किञ्चिच्चूर्णितचन्द्रमण्डलगलत्पीयूषहृद्यो रस-
स्तत्किञ्चित्कविकर्म मर्म न पुन[र्]वाग्डिण्डिमाडम्बरः ॥

—धर्माशोकस्य

४११ अनुद्घुष्टः शब्दैरथ च घटनातः स्फुटतरः
पदार्थानामारम्भः सुखयति न तूत्तानितरसः ।
यथा किञ्चित्किञ्चित्पवनचलचीनांशुकतया
कुचाभोगः स्त्रीणां मदयति न तूद्धाटितमुरः ॥

—तस्यैव

४१२ यन्त्राकृष्टसुवर्णसूत्रमिव यत्पद्यं सुमेरोस्तटा-
दुन्मीलत्कुरविन्दकन्दल इव स्वच्छः पदार्थोदयः।
तत्रा(त्रो)त्फुल्लसदंशुकान्तविलसत्कान्ताकुचान्तोपमं
व्यंगं(व्यङ्ग्यं)यत्र कवित्वमेतदितरद् वा देवतोपप्लवः॥

—कस्यापि

४१३ निन्द्यन्ते यदि नाम [म]न्दमतिभिर्वक्राः कवीनां गिरः
स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः।
तद्वैदग्ध्यविदां सतामपि मनः किं नेहते वक्रतां
धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम्॥

४१४ अमृतजलधेः पायं पायं पयांसि पयोधराः
किरति करकास्ताराकारा यदि स्फटिकावनौ।
तदिह तुलनामानीयन्ते क्षणं कठिनाः पुनः
सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम्॥

—श्रीजयदेवकवेः

४१५ नान्ध्रीपयोधर इवातितरां प्रकाशो
नो गुर्जरीस्तन इवातितरां निगूढः।
अर्थो गिरामपिहितः पिहितश्च किञ्चित्
सौभाग्यमेति मरहट्ठवधूकुचाभः॥

—कस्यापि

४१६ या केवलं सरस्ता(सता) तदपण्डितत्वं
व्युत्पत्तिरेव यदि नीरसता तदा स्यात्।
योगस्तयोस्तु घनसारकुरङ्गनाभि-
मेलापवत् परिमलं कमपि प्रसूते॥

—विद्यापतेः

४१७ असौ रसौचित्यगुणोज्ज्वलोऽपि
बन्धो न काव्यव्यपदेशयोग्यः।

धत्ते खलस्यापि न दुर्विषह्य-
द्वेषग्रहोत्सारणमन्त्रतां यः ॥

—विल्हणस्य

४१८ नवोक्तिर्जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
मसृणाक्षरसम्बन्धः कृत्स्नमेकत्र दुःकरम् ॥

—बाणस्य

४१९ किन्तेन किल काव्येन मथ्यमानस्य यस्य ताः ।
क्षीराब्धेरिव नायान्ति रसामृतपरम्पराः ॥

—जयमाधवस्य

४२० किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥

४२१ कर्तव्या चार्थसारेऽपि काव्ये शब्दविचित्रता ।
विना घण्टारणत्कारं गजो गच्छन्न शोभते ॥

—राजशेखरस्य

४२२ रसालङ्कारसाराऽपि वाणी व्याकरणोज्झिता ।
श्वित्रोपहतगात्रेव न रञ्जयति सज्जनान् ॥

—कृष्णपण्डितानाम्

४२३ काव्यं यद्यपि रसिकं (क) प्रीतिकरं भवति नैकरसबद्धम् ।
सुरतमनाहितकलहं हरिणदृशो नाभिनन्दयति ॥

—वल्लभदेवस्य

४२४ अयं मे वागगुम्फो विष(श)दपदवैदग्ध्यमधुरः
स्फुरद्बन्धो वन्ध्यो जडहृदि कृतार्थः कविहृदि ।

कटाक्षो वामाक्ष्या दरदलितनेत्रान्तगलितः
कुमारे निःसारः स तु किमपि यूनः सुखयति[1] ॥
—कस्यापि

४२५ आपाद्यन्ते विकाशं कथमिह कुमुदानीव कार्कश्यदृप्य-
त्सूर्यारब्धप्रबन्धव्यसनर्नियति(मि)तान्युत्तमानां मनांसि।
अविर्भावं भजन्ते यदि न बुधगुरोर्मन्मथप्रौढिकाराः
क्रीडाधाम्नः कलानाममरुकसुकवेः केऽप्यमी श्लोकपादाः ॥
—अर्जुनवर्मदेवस्य

४२६ पुरातनमनीषिणां पुरुषकारपूर्णाहुति-
र्जनेषु जडचेतसां तरुण एव कर्णज्वरः।
अनर्गलसमुच्छलद्बु[ह]लतर्कजालाकुलं
शिरोमणिमनीषिणः किमपि कौतुकं जृम्भते ॥
—रघुनाथापरनाम्नः [शिरोमणेः]

४२७ वाक्यं च द्विपदीशतान्यथ मा(म)हाकाव्यानि सप्त क्रमात्
त्र्यक्षप्रत्यहनिर्मितस्तुतिकथालक्षाणि चैकादश ।
कृत्वा नाटकनाटिकाप्रकरणप्रायाद् प्रबन्धान् बहून्
विश्राम्यत्यधुनाऽपि नातिशयिता वाणी शिवस्वामिनः ॥
—शिवस्वामिनः

४२८ नानीयन्ते मधुनि मधुपाः पारिजातप्रसूनै[2]-
र्न प्रार्थ्यन्ते[3] तुहिनरुचिना चन्द्रिकाभिश्चकोराः[4]।
अस्मद्वाचां धुरि मधुरिमा यद्यपूर्वावतारः
सानन्दाः[5] स्युः स्वयमिह बुधाः किं मुधा प्रार्थनीयाः ॥
—कस्यापि

---

१. स्थगयति सु० र० भा०। २. °प्ररोहैः; ३. °र्नाभ्यर्थ्यन्ते; ४. °कायां च°; ५. सोल्लासाः;

४२९ विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमाः
भूपालाः कमलाविलासमदिरोन्मीलन्मदाघूर्णिताः ।
आस्ये धास्यति कस्य लास्य[1]मधुना धन्यस्य कामालस-
स्वर्वामाधरमाधुरीमधरयन् वाचां विलासो मम ॥

४३० गिरां देवी वीणागुणरणनहीनादरकरा
यदीयानां वाचाममृतमयमाचामति रसम् ।
अहो तस्याप्यस्यामतुलभणितौ पण्डितपतेः
स्पृहा न स्यादाकर्णयितुमथ कस्यामलमतेः ॥

—पण्डितराजापरनाम्नो जगन्नाथस्य

४३१ यथेव वाग्देवी शुकरसित[2]वासव्यसनिनी
कुहूकण्ठी कण्ठे विलसति तथा चेदनवधिः ।
तदा भूमीभागे निरुपमतमः किञ्चिदपि[3] वा
समाधत्ते साम्यं धनदभणितीनां मधुरिमा ॥

—धनदस्य

४३२ इन्दुप्रभा[र]सविदं विहगं विहाय
कीराननै स्फुरसि भारति का रतिस्ते ।
आद्यं[यदि]श्रयसि जल्पतु कौमुदीनां
गोविन्दराजवचसां च विशेषमेषः ॥

—देवेश्वरस्य

४३३ द्राक्षा तु रूक्षैव सुधा मुधैव
साध्वी न माध्वी विरसो रसालः ।
आस्वादकानां तु मदीयवाचां
वीणाध्वनौ विप्रतिपत्तिरासीत् ॥

—कस्यापि

१. °मुधाम्यर्थनाभिः सु० र० भा० । २. सुकविमुख°; ३. °दिव सु० र० भा० ।

४३४ तावत्कविविहङ्गानां ध्वनिर्लोकेषु शस्यते ।
याचन्न विशति श्रोत्रे मयूरमधुरध्वनिः ॥

४३५ दर्पं कविभुजङ्गानां गता श्रवणगोचरम् ।
विषविद्येव मायूरी मायूरी वाङ् निकृन्तति ॥

—त्रिलोचनस्यैतौ

४३६ श्रोत्रेतराणि करणानि चतुर्भिरेव
चत्वारि तृप्तिममितां विषयैर्लभन्ते ।
श्रोत्राय पक्वसुकृतस्य जनस्य पुण्याः
श्रीकालिदासगिर एव दिशन्ति तृप्तिम् ॥

४३७ एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥

४३८ अन्तरं कियदाख्यान्ति सन्तो रघुकिरातयोः ।
अन्तरं यावदाख्यान्ति सन्तो रघुकिरातयोः ॥

४३९ हृता शिखिनि गौणाढ्या स्तोकशेषाऽपि सा कथा ।
सुरलीढेन्दुलेखेव लोके पूज्यतमाऽभवत् ॥

४४० कृत्स्नप्रबोधकृद् वाणी भा रवेरिव भारवेः ।
माघेनेव च माघेन कम्पः कस्य न जायते ॥

४४१ कवीनामगलद् दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्रा[णां] गतया कर्णगोचरम् ॥

४४२ कर्त्तुं त्रिलोचनादन्यः कः पार्थविजयं क्षमः ।
तदर्थ(र्थः)शक्यते द्रष्टुं लोचनद्वयिभिः कथम् ॥

४४३ त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः ।
त्रयो दण्डिप्रयोगाश्च त्रिषु लोकेषु विश्रुताः ॥

४४४ अकालजलदेन्दोः सा हृद्या वचनचन्द्रिका ।
नित्यं कविचकोरैः सा पीयते न च हीयते ॥

४४५ कलिञ्जरपतिश्चक्रे भीमटः पञ्चनाटकीम् ।
प्राप प्रबन्धराजत्वं तेषु स्वप्नदशाननम् ।।

—श्रीराजशेखरस्ये(स्यै)ते

४४६ कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला ।
सागरस्य परं पारं कपिसेनेव सेतुना ॥

४४७ वक्रोक्त्या मेण्ढराजस्य वहन्त्या सृणिरूपताम् ।
आविद्धा इव धुन्वन्ति मूर्द्धानं कविकुञ्जराः ॥

—बाणस्य

४४८ के वैकटनितम्बेन गिरां गुम्फेन रञ्जिताः ।
निन्दन्ति निजकान्तानां न मौग्ध्यमधुरं वचः ॥

—विकटनितम्बायाः

४४९ भवभूतिमनादृत्य निर्वाणमतिना मया ।
मुरारिपदचिन्तायामिदमाधीयते मनः ।।

—कस्यापि

*अथ अभिज्ञप्रशंसा*

४५० सुधाधाराकाराः सरसतरमाकण्ठकुहरं
कवीनामापीय श्र[व]णचल(चुलु)कैः सूक्तिलहरीः ।
अमान्तं तच्छेषं नयनजलरोमाञ्चपदतः
किरन्ति स्वच्छन्दं किल कतिपये सूक्ष्ममतयः ।।

४५१ अमरसरितः पूराकारान् रसाद् हृदयान्तरे
किल हरिकवेर्वाचः पेशान् विधाय सुधामुचः ।

पुलकमुकुलैः शीर्षान्दोलैः परिस्फुटमद्भुतं
विदधति महाह्लादं जातं क्वचित् कति[चि]द् बुधाः ॥

४५२ हरेः सूरेर्वाणी हृदि निशितवाणीः कलयतां
कवीनां सूराणामिव रणसंवादसमरे ।
सकम्पान्तर्भम्पा भवति रसमूर्च्छोदकनिधेः
कथं नो चेत्ते स्युः पुलकजलसम्भिन्नतनवः ॥

—हरिकवेर्मसैते

४५३ अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः कियन्तः ।
निजघनमकरन्दस्यन्दपूर्णालवालः
कलशसलिलसेकं नेहते किं रसालः ॥

—श्रीजयदेवस्य

४५४ ख्यातिं गमयति सुजनः सुकविर्विदधाति केवलं काव्यम् ।
पु[ष्णा]ति कमलमम्भो लक्ष्म्या तु रविर्नियोजयति ॥

—कस्यापि

*अनभिज्ञनिन्दा*

४५५ त्वं चेन्नीचजनानुरागरभसादस्मासु मन्दादरः
का नो मानद मानहानिरियता भूः किं त्वदेकप्रभुः ।
गुञ्जापुञ्जपरम्परापरिचयाद् भिल्लीजनैरुज्झितं
मुक्तादाम न धाम धारयति किं कण्ठे कुरङ्गीदृशः ॥

—कस्यापि

४५६ कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु ।
कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कालागुरुधूमवासः ॥

४५७ अप्रतिबोधे श्रोतरि वक्तुर्वाणी प्रयाति वैफल्यम् ।
नयनविहीने भर्तरि लावण्यगुणा इव स्त्रीणाम् ॥

४५८ सुकविश्रमानभिज्ञे श्रोतरि वचनानि विफलतां यान्ति ।
भर्तरि मुग्धे प्रौढप्रमदाविलसितानीव ॥

४५९ दत्ताऽनेन कविभ्यः पृथिवी सर्वैव कनकसम्पूर्णा ।
अनवद्यसूक्ति[च]नाश्रममेषां यो विजानाति ॥

—वल्लभदेवस्य

४६० विपुलहृदयाभिगम्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे ।
निन्दति कञ्चुकमेव प्रायः शुष्कस्तनी नारी ॥

—अर्गटस्य

४६१ ख्यातिं यत्र गुणा न यान्ति गुणिनस्तत्रादरं मा कृथाः[1]
किं कुर्यात् सुविचक्षणोऽपि[2] पुरुषः पाषाणकल्पे नरे[3] ।
प्रेमासक्त[4]विलासिनीरतभरव्यालुप्यमानोऽधरे[5]
सीत्कारो मनसः प्रियोऽपि[6] बधिरे नोपैति साफल्यताम्[7] ॥

४६२ पदव्यक्तिव्यक्तीकृतसहृदयानन्दसरणौ
बुधानां[8] काव्येन स्फुरति बुधमात्रस्य धिषणा ।
नवव्रीडावेशव्यसनपिशुनो यः कुलवधू-
कटाक्षाणां पन्थाः स खलु गणिकानामविषयः ॥

४६३ हंसो न भाति चतुरो बकयूथमध्ये[9]
गोमायुमण्डलगतो न विभाति सिंहः ।
जात्यो न भाति तुरगः खरयूथमध्ये
विद्वान् न भाति पुरुषेषु निरक्षरेषु ॥

---

१. °तत्रादरः स्यात् कुतः; २. °द्बहुशिक्षितोऽपि; ३. °भूते जने; ४. °मारूढ°; ५. °मदवशव्यावृत्तकण्ठस्वनः; ६. °रो हि मनोहरोऽपि; ७. किं नाम कुर्याद् गुणम् सु० र० भा० । ८. कवीनां सु० र० भा० । ९. बलिभोजनवृन्दमध्ये सु० र० भा० ।

४६४ विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥

—केषामप्येते

४६५ कवयः परितुष्यन्तु नेतरे कविसूक्तिभिः ।
न ह्यकूपारवत्कूपा वर्द्धन्ते विधुकान्तिभिः ॥

—श्रीधनदस्य

४६६ उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः स्फुटम् ।
जानाति हि पुनः सम्यक् कविरेव कवेः श्रमम् ॥

—श्रीत्रिविक्रमस्य

*मत्सरिनिन्दा*

४६७ ये सूक्तीन्दुकलाकलङ्कज[न]का ये गाढगर्वज्वरा
ये वा केवलतर्ककर्कशधियः साक्षाच्च ये श्रोत्रियाः ।
ये वा द्वेषमषीमलीमसधियस्तान्प्राज्ञगोष्ठीरस-
प्रौढप्रावृडवग्रहानपहरन् वाचां प्रचारान्[1] कुरु ॥

—श्रीविल्हणस्य

४६८ श्लोकार्द्धे वा तदर्द्धे यदि हि विनिहितं दूषणं दुर्दुरूटैः
किन्नश्छिन्नं तदा स्यात् कविकुलविदुषां काव्यकोटीश्वराणाम् ।
वाहाश्चेद् गन्धवाहाधिकसुभगरयाः पङ्गवाः काणखञ्जाः
का हानिः सेरसाहक्षितिपकुलमणेरश्वकोटीश्वरस्य ॥

—भानुकरस्य

४६९ चि(छि)न्नं पद्येऽनवद्ये विनिहितमहितं तानवं तेन किन्नः
त्तुद्रा विद्रावितोद्यद्बहलगुणगणाः काव्यधाराधराणाम् ।

---

१. °हान् परिहरन् वाचां प्रसारं सु० र० भा० ।

छिन्ना विनाशिताशा छिरदपरिवृढाः कुञ्जरा जर्जराङ्गाः
का कीर्तिमु(र्मु)ग्धगन्धद्विपविपिनपतेश्छिन्नकूटाधिपस्य ॥

—हरिकवेर्ममायम्

४७० जडेषु जातप्रतिभाभिमानाः खलाः कवीन्द्रोक्तिषु के वराकाः ।
प्राप्ताग्निनिर्वापणगर्वमम्बु रत्नाङ्कुरज्योतिषु(षि) किं करोति ॥

—बिल्हणस्य

४७१ सत्काव्यपीयूषसुधासमुद्रे न वाडवाग्निर्न च कालकूटः ।
तस्यावगाहेन तथापि चित्रं खलस्य तापः परमभ्युदे(दे)ति ॥

—वत्सराजस्य

४७२ कर्णामृतं सूक्तिरसं विहाय दोषेषु यत्नः सुमहान् खलस्य ।
अव(वे)क्षते केलिवनं प्रविष्टः क्रमेलकः कण्टकजालमेव ॥

—बिल्हणस्य

४७३ दुर्जनहुताशतप्तं काव्यसुवर्णं विशुद्धिमायाति ।
दर्शयितव्यं तस्मान्मत्सरिमनसः प्रयत्नेन ॥

—कस्यापि

४७४ ·········निराकुलधियः सम्पत्सु नाभ्युन्नताः
प्राप्तेनैव पराङ्मुखाः प्रणयिनि प्राणोपयोगैरपि ।
ह्रीमन्तः स्वगुणप्रकाशनविधावन्यस्तुतौ पण्डिता-
स्ते भूमण्डलमण्डनैकतिलकाः(लकाः)सन्तः कियन्तो जनाः ॥

—भर्तृहरेः

४७५ काष्ठं कल्पतरुः सुमेरुरचलश्चिन्तामणिः प्रस्तरः
सूर्यस्तीव्रकरः शशी च विकलः सत्यं पशुः कामगौः ।
कामो नष्टतनुर्बलिर्दितिसुतः क्षारश्च वारांनिधि-
र्नैते वस्तुलनां प्रयान्ति महतां केनोपमा दीयते ॥

४७६ दौर्गत्येन समीरिता हृदयतः कण्ठं समालम्बते
कण्ठात्कष्टतरं कथं कथमपि प्राप्नोति जिह्वाञ्चलम् ।
लज्जाकीलककीलितेव निबिडं तस्मान्न निर्यात्यहो
वाणी प्राणपरिक्षयेऽपि महतां देहीति नास्तीति वा ॥

४७७ अन्तः कोपकषायितेऽपि हृदये साधोरसच्चेष्टितै-
र्भद्राण्येव[ब]हिः क्रिया(?)सु वचनान्याविर्भवन्त्यर्थतः ।
मध्येऽत्यन्तकरालवाडवशिखिज्वालोऽपि वारांनिधेः
कल्लोलाः प्रकटीभवन्ति सततं मुक्ताफलद्रोहिणः ॥

४७८ मज्जन्तोऽपि विपत्पयोधिगहने निःसङ्गवीरव्रताः[१]
कुर्वन्त्येव परोपकारमसकृत्सन्तो यथाशक्तितः[२] ।
राहोरुग्रविशाल[४]वक्त्रकुहरग्रासाभिभूगो(तो)प्यलं
चन्द्रः किं न जनं करोति सुखिनं ग्रासावशेषैः करैः ॥

४७९ कस्यादेशा[त्] प्रहरति[५] तमः सप्तसप्तिः प्रजानां
छायाहेतोः पथि विटपिनामञ्जलिः केन बद्धः ।
अभ्यर्थ्यन्ते किल जलमुचः[६] केन वा वृष्टिहेतो-
र्जात्यैवैते परहितविधौ साधवो बद्धकक्षाः ॥

४८० केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवन्तौ
विश्वं तोयैः स्नपयति नुतः[७] केन वा वारिवाहः ।
विश्वानन्दोपचयचतुरो दुर्जनानां दुरापः
श्लाघ्यो लोकैर्जगति महतामुज्ज्वलोऽयं निसर्गः ॥

४८१ अचिन्त्याः पन्थानः किमपि महतामन्धकरिपो-
र्यदक्ष्णोऽभूत्तेजस्तदकृत कथामप्यमदनाम् ।

---

१. धैर्यावृताः; २. °रमनिशं; ३. °शक्ति वै; ४. °कराल° सु० र० भा० ।
५. क्षपयति; ६. जललवमुचः सु० र० भा० । ७. °यितुमसौ सु० र० भा० ।

मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह
प्रतेने तेनेदं मदनमयमेतत्[1] त्रिभुवनम् ॥

४८२ व्यपगतजडिमानः क्षिप्तदोषाभिषङ्गा
परिदलितकलङ्का वक्रभावा न जातु।
समुदयमपि मित्रेणैव सार्द्धं दधाना-
स्तुहिनकिरणबिम्बादन्य एते महान्तः ॥

४८३ दाता न दापयति दापयिता न दाता[2]
यो दानदापनकरो[3] मधुरं न वक्ति ।
दानञ्च दापनविधिर्मधुरा[4] च वाणी
तत्त्रीण्यमूनि खलु सत्पुरुषे वसन्ति ॥

४८४ न हि भवति वियोगः स्नेहविच्छेदहेतु-
र्जगति गुणनिधीनां सज्जनानां कदाचित् ।
घनपटलनिरुद्धो[5] दूरसंस्थोऽपि चन्द्रः
किमु कुमुदवनानां प्रेमभङ्गं करोति ॥

—केषामप्येते

४८५ विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरतिर्व्यसनं श्रुते प्रकृतिसिद्धमिदं हि महात्मनाम् ॥

—भर्तृहरेः

४८६ हृष्यन्ति चारुचरितैः सुजनस्य सन्तः
क्षुद्रत्वमाशु पिशुना अपि सन्त्यजन्ति ।
रत्नं न केवलमलङ्करणाय लोके
क्रूरग्रहादिशमनञ्च भवेत्प्रभावैः ॥

—क्षेमेन्द्रस्य

---

१. °मेव सु० र० भा० । २. दत्ते; ३. °परो; ४. °नमथो मधुरा सु० र० भा० । ५. °तिमिरनिवद्धो सु० र० भा० ।

४८७ अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदालोकहिते युक्ता रत्नदीपा इवोत्तमाः ॥

४८८ चन्दनं चन्द्रिका चक्रं विपञ्ची चम्पकस्रजः ।
पञ्चमः पञ्चमश्चेति पञ्चभ्योऽजनि सज्जनः ॥

—राजशेखरस्य

४८९ शू(सू)चीदण्ड इवासौ कुपितः सुजनो मुखे परं तीक्ष्णः ।
छिद्रपिधानैकपरः प्रगुणः पश्चात्परं भवति ॥

४९० सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥

—रविगुप्तस्य

४९१ निवसन्नपि सममितरैरभिजातः शिक्षितो न दुर्वचनम् ।
ध्वांक्षविरावी न पिकः स्थितवानपि बलिभुजां भवने ॥

—वल्लभदेवस्य

४९२ यदमी दशन्ति दशना रसना तत्स्वादफलमनुभवति ।
प्रकृतिरियं धवलानां क्लिश्यन्ति यदन्यकार्येषु ॥

४९३ अत्रिजातस्य या मूर्ति[ः] शशिनः सज्जनस्य च ।
क्व सा वै रात्रिजातस्य तमसो दुर्जनस्य च ॥

—त्रिविक्रमस्य

४९४ निर्गुणेष्वपि सत्त्वेषु यः साधुः साधुरेव सः[1] ।
न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मसु ॥

४९५ हृदयानि सतामेव कठिनानीति मे मतिः ।
खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्यतः ॥

---

१. 'साधुरेव भवेत्साधुर्निर्गुणेष्वपि जन्तुषु इति सुपाठः'' इति टिप्पण्याम् ।

४९६ उपचरितव्याः सन्तो यद्यपि कथयन्ति नैकमुपदेशम् ।
तेषां याः स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥

४९७ उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स सद्भिः साधुरुच्यते ॥

४९८ आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न सम्पत्सु ।
अगुरोस्तथा न गन्धः प्रायोऽस्ति यथाग्निपतितस्य ॥

४९९ सम्पदो महतामेव महतामेव चापदः ।
वर्द्धते क्षीयते चन्द्रो न तु तारागणः क्वचित् ॥

५०० अपकुर्वन्नपि प्रायः प्राप्नोति महतः फलम् ।
अर्वं दहन्तमेवाग्निं तर्पयत्येव सागरः ॥

५०१ सन्त एव सतां नित्यमापत्तरणहेतवः[1] ।
गजानां पङ्कमग्नानां गजा एव धुरन्धराः ॥

५०२ सम्पत्तौ च विपत्तौ च महतामेकरूपता ।
उदेति सविता ताम्रस्ताम्र एव विलीयते ॥

५०३ विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः ।
आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥

५०४ दोहिं विय पज्जत्तं बहुवेहि वि किं गुणेहि सुयणस्स ।
विज्जुप्फुरिओ रोसो मित्ती पाहणरेहव्व[2] ॥

—केप्यामप्येते

---

१. °मापदुद्धरणक्षमाः सु० र० भा० । २. द्वाभ्यामेव पर्याप्तं बहुभिरेव किं गुणैः सुजनस्य । विद्युत्स्फुरित इव रोषो मैत्री पाषाणरेखेव ॥ इतिच्छाया

५०५ गवादीनां पयोऽन्येद्युः सद्यो वा जायते दधि ।
क्षीरोदधेस्तु नाद्यापि महतां विकृतिः कुतः ॥

—देवेश्वरस्य

५०६ निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेच्छम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्यायात्पथः प्रविचलन्ति पदं न सन्तः ॥

—भर्तृहरेः

५०७ कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा यान्ति कदाचिदेव ॥

५०८ अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं किल पृष्ठभागे ।
अम्भोनिधिर्वहति [1]दुःसहवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥

—कयोरप्येते

५०९ कान्तिमयादतिविमलादविरतविश्वोपकारगतकालात् ।
सुदृशान्महतोऽपि महान् प्रसरति दीपात्प्रदीप इव ॥

५१० ये चन्दना इव विना न परोपकार-
मात्मव्ययेऽपि समयं गमयन्ति कश्चित् ।
ये वारिदा इव सदाऽतितरामुदारा-
स्ते साधवो भुवनमण्डलमण्डनानि ॥

—हरिकवेर्ममैते

५११ व्यथयतितरामुपेतः स्वच्छप्रकृतीनवद्य[2]लेशोऽपि ।
भृशमुद्विजते चक्षुः सक्तेन रजःकणेनापि ॥

---

१. दुर्वह° सु० र० भा० ।  २. स्वरूपप्रकृतेरवद्य° सु० र० भा० ।

सत्संगाख्यानम्

५१२　जाता जन्मकृतार्थता विकसितं पुण्याम्बुजानां वनं
क्षीणं सम्प्रति सर्वपापपटलं दुःखान्धकारो गतः ।
आनन्दाङ्कुरकोटयः प्रकटिता विघ्नावटी घाटिता
संसर्गे भवतां महासुकृतिनां किं किं न लब्धं मया ॥

—कस्यापि

५१३　सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रे स्थितं राजते ।
स्वातौ सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणैः संसर्गतो भूयते ॥

—विष्णुशर्मणः

५१४　अघं हरतु[1] सम्प्रति हेतुरेष्यतः
शुभस्य वा चरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥

—माघस्य

५१५　किं वा परेण बहुना परिजल्पितेन
संसर्ग एव महतां महतो(वे) फलाय ।
अम्भोनिधेस्तटरुहास्तरवोऽपि येन
वेलाजलोच्छलितरत्नकृतालवालाः ॥

५१६　संसर्गाद् भवति हि साधुता खलानां
साधूनां न च खलसङ्गमात्खलत्वम् ।
आमोदं कुसुमभवं मृदेव धत्ते
मृद्गन्धं न हि कुसुमानि धारयन्ति ॥

---

१. हरत्यघं शि० व० म० ।

५१७ महानुभावसंसर्गः कस्य नोन्नतिकारकः ।
रथ्याम्बु जाह्नवीसङ्गात् त्रिदशैरपि पूज्यते[1] ॥

५१८ साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥

५१९ सङ्गः सर्वात्मना त्याज्यः स चेत् त्यक्तुं न शक्यते ।
सद्भिरेव कर्त्तव्यः सन्तः सङ्गस्य भेषजम् ॥

५२० यथा चिन्तामणिं स्पृष्ट्वा लोहं काञ्चनतां व्रजेत् ।
यथा जम्बूनदीं प्राप्य मृत्तिका स्वर्णतां व्रजेत् ॥

५२१ यथा मानसमभ्येत्य वायसो याति हंसताम् ।
यथाऽमृतं सकृत्पीत्वा नरो देवत्वमाप्नुयात् ॥

५२२ तथैव हि महात्मानो दर्शनस्पर्शनादिभिः ।
सद्यः पुनन्त्यघोपेतांस्तत्सङ्गो दुर्लभा(भ)स्ततः ॥

—केशा(षा)मप्येते

५२३ अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्य भवन्ति योग्यान्ययोग्यानि ॥

—विष्णुशर्मणः

५२४ करोति निर्मलाधारस्तुच्छस्यापि महार्घ्यताम् ।
अम्बुनो बिन्दुरल्पोऽपि शुक्तौ मुक्ताफ[लं] भवेत् ॥

*अथ सदुपदेशाख्यानम्*

५२५ परस्त्री मातेव क्वचिदपि न लोभः परधने
न मर्यादाभङ्गः क्षणमपि न नीचेष्वभिरतिः ।

---

१. वन्द्यते शा० प० ।

रिपौ शौर्यं धैर्यं विपदि विनयः सम्पदि सता-
मिदं वर्त्म भ्रातर्भवतरिरतो[1] यास्यसि सुखम् ॥

—कस्यापि

५२६ सर्वस्य द्वे सुमतिकुमती सम्पदापत्तिहेतू
वृद्धो यूना सह परिचयात् त्यज्यते कामिनीभिः ।
एको गोत्रे स भवति पुमान् यः कुटुम्बं बिभर्ति
स्त्री पुंवच्च प्रभवति यदा तस्य गेहं विनष्टम् ॥

—सरस्वतीकुटुम्बस्य

५२७ वाक्सायका वदनान्निःपतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य हा मर्मसु ते पतन्ति
तान् पण्डितो नावसृजेत्परेषु ॥

५२८ सुखं हि जन्तुर्यदि वाऽपि दुःखं
दैवाधीनं विन्दति नात्मशक्त्या ।
तस्मादिष्टं बलवन्मन्यमानो
न संज्वरेन्नापि हृष्येत्कदाचित् ॥

५२९ तपश्च दानं च शमो दमश्च
ह्रीरार्जवं सर्वभूतानुकम्पा ।
स्वर्गस्य लोकस्य वदन्ति सन्तो
द्वाराणि सप्तैव महान्ति नित्यम् ॥

५३० अधीयानः पण्डितं मन्यमानो
यो विद्यया हन्ति यशः परेषाम् ।
तस्यान्तवन्तश्च भवन्ति लोका
न चास्य तद् ब्रह्म फलं ददाति ॥

—महाभारतादेते

---

१. °र्भरतनिरतो, इति मू० प्र० लिखति ।

५३१ कस्यचित् किमपि नो हरणीयं
मर्मवाक्यमपि नोच्चरणीयम् ।
श्रीपतेः पदयुगं स्मरणीयं
लीलया भवजलं तरणीयम् ॥

५३२ परिहरत पराङ्गनाभिलाषं
बत यदि जीवितमस्ति वल्लभं वः ।
हरि हरि जनकात्मजानिमित्तं
दश दशकन्धरमौलयो लुठन्ति ॥

५३३ तर्कोऽप्रतिष्ठः श्रुतयो [ऽप्रतिष्ठाः]
नासावृषिर्यस्य मतं जघन्यम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥

५३४ त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं भज नित्यमनित्यताम् ॥

५३५ आक्रुश्यमाणो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतञ्चास्य विन्दति ॥

५३६ शतं विहाय भोक्तव्यं सहस्रं स्नानमाचरेत् ।
लक्षं विहाय दातव्यं कोटिं त्यक्त्वा हरिं भजेत् ॥

५३७ कृते शल्यगताः प्राणास्त्रेतायां मांसमाश्रिताः ।
द्वापरे रुधिरासक्ताः कलावन्नगताः स्मृताः ॥

५३८ ददस्वान्नं ददस्वान्नं ददस्वान्नं युधिष्ठिर ।
अन्नदः प्राणदो लोके तस्मादन्नप्रदो भव ॥

५३९ देवतानां गुरूणाञ्च पित्रोश्च पृथवीपते ।
शासनस्याविलङ्घ्यत्वात्प्रत्यादेशो न कर्ह(र्हि)चित् ॥

५४० देवतासु गुरौ पित्रोस्तथा राजकुलेषु च ।
कौटिल्यमाचरन् मोहात् सद्यो नश्यति सान्वयः ॥

५४१ एतैर्यद्यत्समादिष्टं शुभं वा यदि वाऽशुभम् ।
कर्त्तव्यं नियतं भीतैरप्रमत्तैर्बुभूषुभिः ॥

—पुराणादिभ्यः

५४२ कथमद्य कथञ्च श्व इति जीवनचिन्तया ।
मा कृथा हा वृथा दैन्यमायुरन्न(?)प्रयच्छति ॥

५४३ स्नातुश्च वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत् ।
भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं समाचरेत् ॥

५४४ आत्मा(त्म)नाम गुरोर्नाम यन्नाम कृपणस्य च ।
आयुःकामेन न ग्राह्यं ज्येष्ठापत्यकलत्रयोः ॥

५४५ शीलावलम्बनदिवानिशमिष्टचिन्ता-
वित्तानुरूपवसनाभरणादि कार्यम् ।
वार्यञ्च दुर्जनसमाजनिजप्रशंसा-
हास्यादि सज्जनवचो हृदयेऽवधार्यम् ॥

५४६ द्वाविमावपि लोकेऽस्मिन् परप्रत्ययकारकौ ।
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥

५४७ द्वाविमौ पुरुषौ लोके सुखिनौ न कदाचन ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥

५४८ द्वाविमौ पुरुषौ लोके न भूतो न भविष्यतः ।
प्रार्थितं यश्च कुरुते यच्च(श्च)नार्थयते परम् ॥

५४९ द्वाविमौ पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥

५५० द्वाविमौ पुरुषो लोके शिरःशूलकरौ परौ ।
प्र(गृ)हस्थो यो निरारम्भो यतिश्च सपरिग्रहः ॥

५५१ द्वाविमावम्भसि क्षेप्यौ गाढं बद्ध्वा गले शिलाम् ।
धनिनं चाप्रदातारं दरिद्रञ्चातपस्विनम् ॥

५५२ अनुगन्तुं सतां वर्त्म कृत्स्नं न यदि शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥

५५३ प्रत्यहं प्रत्यवेक्षेत प्रातश्चरितमात्मनः ।
किन्नु मे पुरुष(षै)[1]स्तुल्यं किन्नु सत्पुरुषैरिति ॥

५५४ सद्भिरेव सहासीत सद्भिः कुर्वीत सङ्गमम् ।
सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत् ॥

५५५ न द्विषन्ति न याचन्ते परनिन्दां न कुर्वते ।
अनाहूता न चायान्ति तेनाश्मानोऽपि देवताः ॥

५५६ यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गां चरन्तीं निवारय ॥

५५७ वरं दारिद्र्यमन्यायप्रभवाद् विभवादपि ।
कृशताऽभिमता देहे पीनता न तु शोफतः ॥

५५८ दाने तपसि शौर्ये व यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा तस्य जन्म निरर्थकम् ॥

५५९ परोपकारशून्यस्य धिङ् मनुष्यस्य जीवितम् ।
जीवन्ति पशवो येषां चर्माप्युपकरिष्यति ॥

५६० तरवः किं न जीवन्ति भस्त्रा किं न श्वसन्ति च ।
न खादन्ति न मेहन्ते किं ग्रामपशवोऽपरे ॥

---

१. पशुभि॰ शा॰ प॰ ।

५६१ यज्जीव्यते क्षणमपि प्रथितैर्मनुष्यै-
विज्ञानविक्रमयशोभिरभग्नमानम् ।
तन्नाम जीवितमिह प्रवदन्ति सन्तः
काकोऽपि जीवति चिरञ्च मलञ्च भुङ्क्ते ॥

५६२ किं तेन जातु जातेन मातुर्यौवनहारिणा ।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥

५६३ न पुत्रः पितरं द्वेष्टि स्वभावात् स्वस्य रेतसः ।
यः पुत्रः पितरं द्वेष्टि तं विद्यादन्यरेतसम् ॥

५६४ अपूज्या यत्र पूज्यन्ते पूज्यानाञ्च व्यतिक्रमः ।
त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम् ॥

५६५ देवतातिथिविप्राणां पूजनं पापनाशनम् ।
लोकद्वयेऽपि शुभकृद् दानं धर्मयशस्करम् ॥

५६६ आपद्यपि दुरन्तायां नैव गन्तव्यमक्रमे ।
राहुरप्यक्रमेणैव पिबन्नप्यमृतं मृतः ॥

५६७ न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये प्रवदन्ति धर्मम् ।
नासौ धर्मो यत्र न चास्ति सत्यं
न तत्सत्यं यच्छलेनानुविद्धम् ॥

५६८ सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन् विब्रुवन् वाऽपि नरो भवति किल्विषी ॥

५६९ तस्मात् सभ्यः सभां गत्वा रागद्वेषविवर्जितः ।
वचस्तथाविधं ब्रूयाद् यथा न नरकं व्रजेत् ॥

५७० दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥

५७१ वरं कार्यं मौनं न च वचनमुक्तं यदनृतं
वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् ।
वरं प्राणत्यागो न च पिशुनवादेष्वभिरति-
र्वरं भिक्षाशित्वं न च परधनास्वादनरसः ॥

५७२ परलोकहितं तात प्रातरुत्थाय चिन्तय ।
इह ते कर्मणामेव विपाकश्चिन्तयिष्यति ॥
—मदालसायाः

५७३ इज्याध्ययनदानानि तपः॰ सत्यं क्षमा दया ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥

५७४ अनालस्यं क्षमा सत्यमहिंसाऽमद आर्जवम् ।
प्रीतिः प्रसादो माधुर्यं मार्दवञ्च यमा दश ॥

५७५ कृत्वाऽपि पातकं कर्म यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन लिप्यते ॥

५७६ आश्मशानान्निवर्तन्ते ज्ञातयः सह बान्धवैः ।
त्वयैकेनैव गन्तव्यं तत्कर्म सुकृतं कुरु ॥

५७७ गङ्गोद्भेदे कुरुक्षेत्रे विश्रान्तौ मणिकर्णिके ।
वेण्यां गयायामोङ्कारे स्नात्वा दत्वा सुखी भवेत् ॥

५७८ शरणागतरक्षार्थं स्त्रीगोद्विजहिताय च ।
स्वस्वाम्यर्थे त्यजेत्प्राणांस्तस्य लोकाः सनातनाः ॥

५७९ परात्परतरं यान्ति नारायणपरायणाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥

५८० तस्यान्तरायो वै सूत देवेन्द्रत्वादिकं फलम् ।
वासुदेवे मनो यस्य जपहोमार्चनादिषु ॥

५८१ गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥

५८२ षडक्षरेण मन्त्रेण पुष्पमेकमपि स्वयम् ।
लिङ्गस्य मूर्ध्नि यो दद्यात् स भूयोऽपि न जायते ॥

५८३ उपोष्यैकादशीं सर्वां तथा कृष्णचतुर्दशीम् ।
ध्यात्वा हरिहरं देवं प्राप्नोति परमं पदम् ॥

५८४ मोहादवाचीमबुधाः प्रतीचीं
प्राचीमुदीचीमपि पर्यटन्ति ।
सं(सच्)चिन्मये मानस एव तीर्थे
स्वस्थे सुखं स्नातुमपारयन्तः ॥

५८५ ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संष(श)यः ॥

५८६ अदृष्टा (ष्ट्वा) पतितां भार्यां मूढो यस्तु परित्यजेत् ।
सप्तजन्मनि स स्त्रीत्वं लभते नात्र संष(श)यः ॥

५८७ कृते पुण्येऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥

५८८ तटस्थमुद्धृतं वाऽपि शीतमुष्णमथापि [च] ।
गाङ्गमम्बु पुनात्येव पापादामरणान्तिकात् ॥

५८९ रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् ।
स्तुवन्ति नामभिर्दिव्यैर्न ते संसारिणो जनाः ॥

५९० स्वपुरुषमभिवीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।

परिहर मधुसूदनप्रपन्नान्
प्रभुरहमन्यनृणां न वैष्णवानाम् ॥

५९१ श्रोत्रियं सुभगामग्निं साग्निकं धार्मिकं नदीम् ।
प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥

५९२ पापिष्ठं दुर्भगामन्त्यं नग्नमुत्कृत्तनासिकम् ।
अप्रियं प्रातरुत्थाय यः पश्येत्कलिमाप्नुयात् ॥

५९३ प्रेतधूमे विरेके च वान्तौ च क्षुरकर्मणि ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥

५९४ उदक्यापतितम्लेच्छचाण्डालाद्यभिभाषणे ।
मार्जारमूषकस्पर्शे विण्मूत्रोत्सर्गदर्शने ॥

५९५ अशुचीक्षणेऽश्रुपाते कलहे श्वासकासयोः ।
रथ्याप्रसर्पणेऽभ्यङ्गे क्षुते नर्मण्युपस्पृशेत् ॥

५९६ कुर्यादाचमनाभावे भास्करस्यावलोकनम् ।
स्पृशेद्द्वा स्वर्णतृणगोगोविड्भूदक्षिणश्रुतीः ॥

५९७ देवाधिकारिणो म्लेच्छान् विकर्मस्था[न्]द्विजानपि ।
विलोक्योपस्पृशेत् स्पृष्ट्वा सवासा जलमाविशेत् ॥

५९८ अजाश्वं मुखतो मेध्यं गावो मेध्यास्तु पृष्ठतः ।
ब्राह्मणाः पदतो मेध्याः स्त्रियो मेध्यास्तु सर्वतः ॥

५९९ नास्ति यज्ञः स्त्रियाः किञ्चिन्न वृ(व्र)तं नोपवासकः ।
यातुर्भर्तरि शुश्रूषा तया स्वर्गं जयत्यसौ ॥

६०० दुःशीलो दुर्भगो(गः)क्रूरो जडो रोग्यधनोऽपि वा ।
पतिः स्त्रीभिर्न हातव्यो लोको(के)प्सुभिरपातकी ॥

६०१ मृते भर्तरि या नारी ब्रह्मचर्ये व्यवस्थिता ।
सा मृता लभते स्वर्गं तथा ते ब्रह्मचारिणः ॥

६०२ त्रि(ति)स्रः कोट्योऽर्द्धकोटिश्च यानि रोमाणि मानुषे ।
तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति ॥

६०३ व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।
एवं पतिं समुद्धृत्य नारी स्वर्गेषु मोदते ॥

६०४ पृथक् चितिं समारुह्य न विप्रा(प्रो) गन्तुमर्हति ।
भर्तृदेहेन या याति तस्या लोकाः सनातनाः ॥

६०५ शुचिर्भूमिगतं तोयं शुचिर्नारी पतिव्रता ।
शुचिः क्षेमकरो राजा सन्तोषी ब्राह्मणः शुचिः ॥

६०६ नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।
वत्सोऽपि स्तनपाने स्याच्छ्वा मृगग्रहणे शुचिः ॥

६०७ गच्छेदेको न पन्थानं स्वयं नोपानहौ हरेत् ।
शिरसा न वहेद् भारं न प्रधावेत वर्षति ॥

६०८ न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि ।
न वस्त्रैः सह नाजस्रं नाविज्ञाते जलाशये ॥

६०९ नद्या यच्च परिभ्रष्टं नद्या यच्च विवर्जितम्[1] ।
गतप्रत्यागतञ्चैव तत्तोयं परिवर्जयेत् ॥

६१० प्रवहद्ब्राह्मणं तोयं ताडागं क्षत्रियोदकम् ।
वापीकूपगतं वैश्यं शौद्रञ्च गृहभाण्डगम् ॥

---

१. यच्चावर्तसमन्वितम् शा० प०।

६११ अप्स्वात्मानं न वीक्षेत नावगाहेत्पयोऽस्यम् ।
सन्दिग्धनावं नारोहेन्न बाहुभ्यां नदीं तरेत् ॥

६१२ शीतास्वप्सु निषिच्योष्णा मन्त्रसम्भारसम्भृताः ।
गृहेऽपि शस्यते स्नानं तद्धीनमफलं विदुः[1] ॥

६१३ नाग्निं मुखेनोपधमेन्नाधः कुर्यान्न लङ्घयेत् ।
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥

६१४ देवालयं चत्वरञ्च नक्तं सेवेत न द्रुमान् ।
शून्याटवीं शून्यगृहं श्मशानञ्च दिनेष्वपि ॥

६१५ जलं पिबेन्नाञ्जलिना शयानं न प्रबोधयेत् ।
परान्नं वा चरन्तीं गां धयन्तीं वा न वारयेत् ॥

६१६ शय्यादीपाधमस्तम्भच्छायां दूरेण वर्जयेत् ।
नर्मालापं न कुर्वीत धीमानसहृनैः सह ॥

६१७ नोर्ध्वजानुश्चिरं तिष्ठेन्न स्यादुत्कटकासनः ।
न नासिकां विकुष्णीयान्न स्वयं कर्त्तयेन्नखान् ॥

६१८ सर्वथा सन्त्यजेद् वादं न कञ्चिन्मर्मणि स्पृशेत् ।
सर्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः ॥

६१९ कुशस्वर्णौ सदा धार्यौ बर्हिर्माल्यं न धारयेत् ।
नागन्धं बिभृयात् पुष्पं नात्मार्थं गुम्फयेत्स्रजम् ॥

६२० नित्यमामलके लक्ष्मी[र्] नित्यं हरितगोमये ।
नित्यं शङ्खे च पद्मे च नित्यं शुक्ले च वाससि ॥

---

१. स्नानं गृहेऽपि कुर्वाणः प्राप्नोति स्नानजं फलम् शा० प० ।

६२१ बालार्कं प्रेतधूमं च वृद्धां स्त्रीं पल्वलोदकम् ।
आयुःकामो न सेवेत रात्रौ च दधिभोजनम् ॥

६२२ नोत्सङ्गे भक्षयेन्नाश्नन्मौलिं भूमिं च संस्पृशेत् ।
क्वचिद् गच्छेन्न चोच्छिष्टः पश्येज्ज्योतींषि नाशुचिः ॥

६२३ ब्राह्मणो ब्रह्मतीर्थेन त्रिरद्भिः समुपस्पृशेत् ।
कुर्वन्नाचमनं विष्णुमोङ्कारमपि संस्मरेत् ॥

६२४ हस्तद्वयस्थितैर्दर्भैः समाचामति यो द्विजः ।
सोमपानफलं तस्य भुक्त्वा यज्ञफलं भवेत्[1] ॥

६२५ गृहेऽपि निवसन् विप्रो मुनिर्मांसविवर्जनात् ।
मांसादोऽन्योऽपि मांसस्य त्यागत्स्वर्गं व्रजे[द्]ध्रुवम् ॥

६२६ आत्मार्थं यः पशून् हन्यात् सोऽवश्यं नरकं व्रजेत् ।
देवान् पितॄन् समभ्यर्च्य खादन् मांसं न पापभाक् ॥

६२७ अनभिध्यां परस्वेषु सर्वसत्त्वेषु सौहृदम् ।
कर्मणां फलमस्तीति मनसा त्रितयं चरेत् ॥

६२८ प्राणातिपातं स्तैन्यञ्च परदाराभिमर्षणम् ।
त्रीणि पापानि कायेन नित्यशः परिवर्जयेत् ॥

६२९ असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र न जल्पेन्न च चिन्तयेत् ॥

६३० अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् ।
शमो दानं यथाशक्ति गार्हस्थो धर्म उच्यते ॥

---

१. लभेत् शा० पा० ।

६३१ देवान् पितॄन् मनुष्यांश्च भृत्यान् गृह्यांश्च वै पशून्[1] ।
भोजयित्वा तदा[2] पश्चाद् गृहस्थो भोक्तुमर्हति ॥

६३२ वृक्षांश्छित्वा महीं भित्वा हत्वा कीटपिपीलिकान् ।
दत्वाऽन्नं कार्पुकोऽर्थिभ्यः सर्वपापैः प्रमुच्यते ॥

६३३ राज्ञां तु दत्वा षड्भागं देवतानाञ्च विंशतिम् ।
त्रिंशद् दत्वा च विप्राणां कार्पुको नावसीदति ॥

६३४ चक्षुर्दद्यान्मनो दद्याद् वाचं दद्याच्च सूनृताम् ।
उत्थाय चासनं दद्यादेष धर्मः सनातनः ॥

६३५ तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
सतामेतानि हर्म्येषु नोच्छिद्यन्ते कदाचन ॥

६३६ ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किं न यच्छसि ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥

६३७ उष्णकाले जलं दद्याच्छीतकाले हुताशनम् ।
प्रावृट्काले गृहं देयं सर्वकालेषु भोजनम् ॥

६३८ अवृत्तिव्याधिशोकार्तानुवर्तेत शक्तितः ।
आत्मवत् सततं पश्येदपि कीटपिपीलिकम् ॥

६३९ गां पङ्कादु ब्राह्मणीं दास्याद् वृत्तिं लोपात् द्विजं वधात् ।
मोचयन्मुच्यते पापादाजन्ममरणान्तिकात्[3] ॥

६४० न कश्चिदपि जानाति किं कस्य श्वो भविष्यति ।
अतः श्वःकरणीयानि कुर्यादद्यैव बुद्धिमान् ॥

---

१. देवताः शा० प० । २. ततः शा० प० । ३. °ते जन्तुः पापादामरणा° शा० प० ।

६४१ उपकारः परो धर्मः परोऽर्थः कर्मनैपुणम् ।
पात्रे दानं परः कामः परो मोक्षो वितृष्णाता ॥

६४२ अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च सञ्चयम् ।
अवन्ध्यं दिवसं कुर्याद् दानाध्ययनकर्मभिः ॥

६४३ दीपोपशमने पुंसां कूष्माण्डच्छेदने स्त्रियाः ।
अचिरेणैव कालेन कुलच्छेदो भवेद् ध्रुवम् ॥

६४४ अलाबुं वर्तुलाकारं वार्ताकं कुन्दसन्निभम् ।
प्राणान्तेऽपि च नाश्नीयान्मसूरान्नञ्च मूलकम्[1] ॥

६४५ परदारा न गन्तव्या सर्ववर्णेषु सर्वथा[2] ।
नहीदृशमनायुष्यं त्रिषु लोकेषु वर्तते[3] ॥

६४६ मात्रा स्वस्रा दुहित्रा वा नैकशय्यासनो[4] भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥

६४७ प्रकीर्णकेशामनवेक्ष्यकारिणीं सदा च भर्तुः प्रतिकूलभाषणीम् ।
परस्य वेश्माभिरतामपत्रपामेवंविधां योषितमाशु वर्जयेत् ॥

६४८ हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद् व्यभिचारिणीम् ॥

६४९ कुचैलिनं दन्तमलावधारिणं
बह्वाशिनं निष्ठुरवाक्यभाषिणम् ।
सूर्योदये वाऽस्तमये[5] च शायिनं
विमुञ्चति श्रीरपि चक्रपाणिनम् (धारिणम् !) ॥

---

१. °त्तं सवल्मलम् शा० प० । २. कर्हिचित् शा० प० । ३. विद्यते शा० प० । ४. न विविक्तशनो शा० प० । ५. चास्तमने शा० प० ।

६५० एकच्छागं त्रिरावेयं द्विगवं पञ्चमाहिषम् ।
षडश्वं सप्तमातङ्गं शक्रस्यापि श्रियं हरेत् ॥

६५१ षष्ठीषु तैलं फलमष्टमीषु क्षुरक्रियाञ्चैव चतुर्दशीषु ।
स्त्रीसेवनं नष्टकलासु पुंसामायुःक्षयार्थं मुनयो वदन्ति ॥

६५२ प्राक्शिरःशयने विन्द्याद्धनमायुश्च दक्षिणे ।
पश्चिमे प्रबला चिन्ताहानि[र्]मृत्युस्तथोत्तरे ॥

६५३ केशे कीटावपन्ने च गोघ्राते मक्षिकान्विते ।
मृदम्बु भस्म वा तद्वत् प्रक्षेप्तव्यं विशुद्धये ॥

६५४ द्रव्यक्रीता तु या नारी न सा पत्नी विधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत ॥

६५५ अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।
शालिग्रामशिलालग्नं सर्वं याति पवित्रताम् ॥

६५६ मातृवत् परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पश्यति ॥

६५७ अन्यायोपार्जितं वित्तं दश वर्षाणि तिष्ठति ।
प्राप्ते चैकादशे वर्षे समूलञ्च विनश्यति ॥

६५८ सुखं हन्ति सुतं हन्ति हन्ति पुण्यं पुराकृतम् ।
स्वर्गेऽपि यत्पितॄन् हन्ति यदि साक्ष्यनृतं वदेत् ॥

६५९ लोभमूलानि पापानि रसमूलानि व्याधयः ।
स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखी भवेत् ॥

—१४—

६६० गुरुं हुङ्कृत्य तुङ्कृत्य विप्रं निर्जित्य वादतः ।
अरण्ये निर्जले देशे जायते ब्रह्मराक्षसः ॥

६६१ सिंहप्रसूता या गावो मकरे महिषी तथा ।
स्वामिनोऽवश्यमिच्छन्ति श्रावणे वडवादि च ॥

६६२ अग्नौ दग्धं जले मग्नं यन्नीतं चौरपार्थिवैः ।
तत्सर्वं परलोकाय विना द्यूतेन हारितम् ॥

६६३ लशुनं गृञ्जनञ्चैव पलाण्डुं ग्रामकुक्कुटम् ।
छत्राकं विड्वराहञ्च भुक्त्वा चान्द्रायणं चरेत् ॥

६६४ तृप्त्यर्थं भोजनं येषां सन्तानार्थं च मैथुनम् ।
वाक् सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते ॥

६६५ उद्वेगः कलहः कण्डूयूतं मद्यं परस्त्रियः ।
आहारो मैथुनं निद्रा सेव्यमानं तु वर्द्धते ॥

६६६ न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

६६७ अतिथिर्यस्य भग्नाशो ग्र(गृ)हात्प्रतिनिवर्तते ।
स तस्य दुष्कृतं दत्वा पुण्यमादाय गच्छति ॥

६६८ गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥

६६९ घृतं सर्षपतैलञ्च यत्तैलं पुष्पवासितम् ।
द्रव्यान्तरगतं तैलं न दुष्टं ग्रहणं विना ॥

६७० मध्याह्ने स्नानवेलायां यो भक्षे[द्] दन्तधावनम् ।
निराश(शा)स्तस्य गच्छन्ति देवताः पितृभिः सह ॥

६७१ तारताम्रसुवर्णानामर्कशो(षो)डशखेन्दुभिः ।
त्रिलोहविहिता मुद्रा तीव्रदारिद्र्यनाशिनी ॥

—वराहमिहिरः

६७२ श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

६७३ न्यासापहर्ता तु नरो यमस्य विषयं गतः ।
नरकाणां शतं भुक्त्वा कृमियोनिं प्रपद्यते ॥

६७४ उपस्थिते विवाहे च दाने यज्ञे तथा विभो ।
समाचरति यो विघ्नं स मृतो जायते कृमिः ॥

६७५ नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं तपः ।
नास्ति रागसमं दु[ः]खं नास्ति त्यागसमं सुखम् ॥

६७६ ये नास्तिका निःक्रियाश्च गुर्वादेशाभिलङ्घनाः ।
अधर्मज्ञा गताचारास्ते भवन्ति गतायुषः ॥

६७७ विशीला भिन्नमर्यादा नित्यं सङ्कीर्णमैथुनाः ।
अल्पायुषो भवन्तीह नरा नि[र]यगामिनः ॥

६७८ सर्वलक्षणहीनोऽपि समुदाचारवान्नरः ।
श्रद्दधानोऽनसूयुश्च शतं वर्षाणि जीवति ॥

६७९ अक्रोधः सत्यवादी च भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥

६८० उं(?)ष्टमर्दी तृणच्छेदी नखखादी च यो नरः ।
नित्योच्छिष्टः शङ्कशूको नेहायुर्विन्दते महत् ॥

६८१ परदारा न गन्तव्या सर्ववर्णेषु कर्ह(र्हि)चित् ।
न हीदृशमनायुष्यं लोके किञ्चन विद्यते ॥

६८२ यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्मिताः ।
तावद् वर्षसहस्राणि नरकं पर्युपासते ॥

६८३ पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारयुक्ताय गर्भिण्यै दुर्बलाय च ॥

६८४ विवाहकाले रतिसम्प्रयोगे प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थेऽप्यनृतं वदेत पञ्चानृतान्याहुरपातकानि ॥

६८५ नित्यं क्रोधाच्छ्रियं रक्षेत्तपो रक्षेच्च मत्सरात् ।
विद्यां मानापमानाभ्यामात्मानं प्रमदाजनात् ॥

६८६ क्षेत्रवृत्तिगृहच्छेदं प्रीतिच्छेदञ्च ये नराः ।
आशाच्छेदञ्च कुर्वन्ति ते नरा नरकौकसः ॥

६८७ वाचो वेगं मनोवेगं यो वेगमुदरोद्भवम् ।
उपस्थवेगं सहते स स्वर्गी जायते नरः ॥

६८८ क्षमातुल्यं तपो नास्ति सन्तोषान्नापरं सुखम् ।
न च तृष्णापरो व्याधिर्न च धर्मो दयापरः ॥

६८९ ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ।
वैश्यानां ज्ञानधनवान् शूद्राणामेव जन्मना ॥

६९० दानेन भोगो भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥

६९१ कोपे दासी रतौ वेश्या भोजने जननीसमा ।
विपत्तौ बुद्धिदात्री च सा भार्या सैव दुर्लभा ॥

६९२ माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति ।
यस्मा[द्]दृष्टिमदा नारी तस्मात्तां परिवर्जयेत् ॥

६९३ राज्यमानं धनाढ्यञ्च विद्यावन्तं तपस्विनम् ।
रणे शूरञ्च दातारं कनिष्ठं ज्येष्ठ उच्यते ॥

*इति सदुपदेशप्रकरणम्*

*अथ खलनिन्दा*

६९४ मृत्युच्छेदविधौ कलत्रहरणे मित्रापदां वारणे
सम्प्राप्ते शरणे विजातिमरणे स्वामिग्रहे गोग्रहे ।
ये शक्ताः पुरुषाः पराङ्मुखतया कुर्वन्त्युदासीनतां
तानालोक्य विलोकितुं मृगयते सूर्योऽपि सूर्यान्तरम् ॥

६९५ धातस्तात तवैव दूषणमिदं यन्नाम कस्तूरिका
कान्तारान्तरचारिणां तृणभुजां नाभौ कृता मृत्यवे[1] ।
यद्येनां पिशुनस्य तस्य[2] रसनाकंदेऽकरिष्यस्तदा-
[3]नायासेन विनाऽभविष्यदुभयं कीर्तिश्च निर्दोषता ॥

६९६ जिह्वैकैव सतामुभे फणभृतः स्रष्टुश्चतस्रश्च ताः
पञ्चेशस्य गुहस्य षण्णिगदिताः सप्तार्चिषः सप्त ताः[4] ।
पौलस्त्यस्य दशैव ताः[5] फणिपतेर्जिह्वासहस्रद्वयं
जिह्वानामिह लक्षकोटिगणनाः[6] नो दुर्जनानां मुखे ॥

---

१. यन्नाभिमूले कृता । २. यद्येवंपिशुनस्य हन्त । ३. प्राया° सु० र० भा० ।
४. ताः सप्तैव विभावसोर्नियमिताः षट्कार्तिकेयस्य च । ५. दशाभवन् ।
६. जिह्वालक्षशतैककोटिनियमो सु० र० भा० ।

६९७ पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकरिणां दर्पोपहत्यै[1] सृणिः।
अन्यत्तद्[2] भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिदलने[3] धाताऽपि भग्नोद्यमः॥

—केषामप्येते

६९८ ते तावत् कृतिनः परार्थनिरताः स्वार्थस्य बाधेन ये
मध्यास्तेऽपि परोपकारनिरताः स्वार्थाविरोधेन ये।
तेऽमी मानुषराक्षसाः परहितं यैः स्वार्थतो हन्यते
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे॥

—भर्तृहरेः

६९९ न विषममृतं कर्तुं शक्यं प्रयत्नशतैरपि
त्यजति कटुतां न स्वां निम्बः स्थितोऽपि पयोह्रदे।
गुणपरिचितामार्यां वाणीं न जल्पति दुर्जन-
श्चिरमपि बलाध्माते लो(लौ)हे कुतः कनकाकृतिः॥

—तस्यैव

७०० वसनासनमात्रवैभवो धनदादप्यधिकायते खलः।
यदि वेत्ति षडक्षराणि चेदुपदेष्टुं शितिकण्ठमिच्छति॥

७०१ मित्रोदये शीर्यति निर्निमित्तं दोषागमे द्योतत एव सद्यः।
सम्बन्धमात्रेण दहत्यवश्यं खलेऽनले वा कतरो विशेषः॥

७०२ समर्पितास्तेन न कस्य दोषाः
हृता गुणा वा न खलेन कस्य।
तथापि दोषैर्न वियुज्यतेऽसौ
युतोऽपि नैकेन गुणेन चित्रम्॥

---

१. दर्पोपशान्त्यै। २. इत्थं तद्। ३. °हरणे सु० र० भा०।

७०३ अशेषशास्त्राण्यपि सङ्कलय्य प्रायः स्वभावं न जहाति जिह्मः ।
निपीय पीयूषमयूखरश्मीन् समीहतेऽङ्गारचयं चकोरः ॥

७०४ न दुर्जनः सज्जनतामुपैति
बहुप्रकारैरपि सेव्यमानः ।
संसिक्तमूलः पयसा गुडेन
न निम्बवृक्षो मधुरत्वमेति ॥

—केषामप्येते

७०५ खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न प[श्य]ति ॥

७०६ न विना परिवादेन रमते दुर्जनो जनः ।
काकः सर्वरसान् भुक्त्वा विना मेध्यं न तृप्यति ॥

—भगवतो व्यासस्ये(स्यै)ते

७०७ लब्धोच्छ्रायो नीचः प्रथमतरं स्वामिनं पराभवति ।
भूमिरजो रथ्यादावुत्थापकमेव संवृणुते ॥

—रविगुप्तस्य

७०८ खलानां कण्टकानाञ्च द्विविधैव प्रतिक्रिया ।
उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम् ॥

७०९ सुमुखोऽपि सुवृत्तोपि सन्मार्गपतितोऽपि सन् ।
सतां वै पादलग्नोऽपि व्यथयत्येव कण्टकः ॥

७१० नीश्च दुर्जनजिह्वा च प्रतिकूलविसर्पिणी ।
परप्रतारणायैव दारुणा केन निर्मिता ॥

७११ यस्मिन् वंशे समुत्पन्नस्तमेव निजचेष्टितैः ।
दूषयत्यचिरेणैव घुणकीट इवाधमः ॥

७१२ दह्यमानाः सुतीक्ष्णेन नीचाः परयशोऽग्निना ।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥

७१३ पात्रमपात्रीकुरुते दहति गुणं स्नेहमाशु नाशयति ।
अमले मलं नियच्छति दीपज्वालेव खलमैत्री ॥

७१४ प्रेरयति परमनार्यः शक्तिविहीनोऽपि जगदभिद्रोहे ।
तेजयति शस्त्रधारां स्वयमसमर्था शिला छेत्तुम् ॥

७१५ अयःपिण्ड इवोत्तप्ते खलानां हृदये क्षणात् ।
पतिता अपि नश्यन्ति गुणास्तोयकणा इव ॥

७१६ दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥

७१७ परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान् व्यथयते ।
पवनाशिनो भुजङ्गाः परोपतापं न मुञ्चन्ति ॥

७१८ विशिखव्यालजीवाभ्यां योऽन्त्यवर्णविनिर्मितः ।
स जीवाकर्षणं कुर्यान्न तच्चित्रं कुलोचितम् ॥

७१९ वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः ।
श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥

७२० दोषमेव समाधत्ते गुणं न विगुणो जनः ।
जलौका(क)स्तनसम्पृक्तं रक्तं भवति नामृतम् ॥

७२१ स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति ।
सम्पूर्णेऽपि तडागे काकः कुम्भोदकं पिबति ॥

—केषामप्येते

७२२ अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते चक्षुः ॥

७२३ विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः ॥

सुबन्धोरप्येतौ

७२४ शिरसि निहितोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहात् ।
तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ॥

७२५ विकसितवदनः पिशुनः प्रोत्फुल्ल[वि]लोचनो यदा भवति ।
मन्ये तदाऽस्य जातः सदहितकरणश्रमः सफलः ॥

७२६ यथा यथैव स्नेहेन भूयिष्ठमुपचर्यते ।
धत्ते तथा तथा तापमहो वैश्वानरः खलः ॥

७२७ बिभेति दुर्जनाल्लोकः सौजन्येऽपि क्षणं स्थितात् ।
कः शौनिकस्य प्रत्येति क्रीणतो दोग्धुमप्यजाम् ॥

७२८ स्वभावकठिनस्यास्य कृत्रिमां बिभ्रतो नतिम् ।
गुणोऽपि परहिंसायै चापस्य च खलस्य च ॥

७२९ वन्दितोऽप्येष दोषाय तद्वरं निन्दितः खलः ।
स्तुतोऽप्यहिर्दशत्येव न दृढं पीडिताननः ॥

७३० खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् ।
दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥

७३१ दर्पणस्य खलु दुर्जनस्य च ब्रूत हन्त सुजनाः किमन्तरम् ।
यावदेव पुरतो वसेज्जनस्तावदेव हृदयेऽस्य वर्तते ॥

—केषामप्येते

७३२ पश्चादन्यत्पुरश्चान्यत्पुनरुक्तभयादिव ।
परापवादविद्वांसो वदन्त्यविकलाः खलाः ॥

—पुनरुपण्डितस्य

७३३ ये वर्द्धयन्ति पापर्द्धिकौतुकं पृथिवीपतेः ।
विशेषः कतरस्तेषां पिशुनानां शुनामपि ॥

—श्रुतधररामस्य

७३४ अन्यस्माल्लब्धोष्मा क्षुद्रः प्रायेण दुःसहो भवति ।
रविरपि न दहति तादृक् यादृक् निर्दहति वालुकानिकरः ।

७३५ दुर्वचनमनभिजाताः स्वजनं प्रत्युत्सृजन्त्युपेत्यापि ।
अश्वतरास्तीर्थाम्भसि दूरादागत्य मेहन्ति ॥

—वल्लभदेवस्यैतौ

७३६ उज्ज्वलगुणमभ्युदितं क्षुद्रा(द्रो)द्रष्टुं न कथमपि क्षमते ।
हित्वा तनुमपि शलभः क्षिप्रं दीपार्चिरपहरति ॥

—तस्यैव

७३७ एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम् ।
सिद्धार्थानामेषां स्नेहोऽप्यश्रूणि पातयति ॥

—शुचीगोभट्टस्य

७३८ अथवात्मनो विनाशं गणयति न खलः परव्यसनसंहृष्टः ।
प्रायः सहस्रनाशे समरमुखे नृत्यति कबन्धः ॥

—रविगुप्तस्य

७३९ भासितसदनादमलादकलङ्काल्लोकसेवितात्पुरुषात् ।
मलिनतरोऽप्युन्मीलति दशेन्धनाद् यथाञ्जनः पुञ्जः ॥

—हरिकवेर्ममायम्

७४० लवणाल्लुगिति प्राह प्रत्ययस्यैव पाशि(णि)निः ।
विद्याधरो लुगं प्राह लवणप्रकृतेरपि ॥

—तस्यैव

७४१ संनिष्णो(ष्ठ)ऽपि च वेदान्ते साधुत्वं नैति दुर्जनः ।
चिरं जलनिधौ मग्नो मैनाक इव मार्द्र(र्द)वम् ॥

*असत्संगनिन्दा*

७४२ स्वल्पोऽपि दुर्जनानां संसर्गो दुःसहो भवति ।
दुग्धौघोऽपि हि दध्नो लेशादायाति वैयात्यम् ॥

—हरिकवेर्ममायम्

७४३ असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
सुयोधनप्रसङ्गेन भीष्मो गोहरणं गतः ॥

७४४ न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह ।
पयोऽपि शौण्डिनीहस्ते मदिरां मन्यते जनः ॥

७४५ वीणादण्डाश्रयात्तुम्बं चुम्बत्युच्चैः कुचद्वयम् ।
तन्तुनाऽपि त(च)संसर्गाद्रक्तं नक्तञ्चरो यथा[1] ॥

*सुजनप्रंदश(प्रशं)सा दुर्जननिन्दा [च]*

७४६ असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो
न सङ्गाद् दौर्जन्यं भवति सुजनत्वं क्वचिदपि ।
प्ररूढे संसर्गे मणिभुजगयोर्जन्मजनिते
मणिर्नाहेर्दोषान् स्पृशति न च सर्पो मणिगुणान् ॥

---

१. वीणावंशाश्रया तुम्बी चुम्बत्युच्चैः कुचौ स्त्रियः । पिबत्यनार्यसंयोगाद्रक्तं नक्तञ्चरी यथा ॥ सु० र० भा० ।

७४७ नीचो जनो गुणशतैरपि सेव्यमानो
हास्येन यद् वदति तत्कलहेऽप्यवाच्यम् ।
आक्रोशितोऽपि सुजनो न वदत्यवाच्यं
निःपीडितोऽपि मधुरं क्षरतीक्षुदण्डः ॥

७४८ जिह्माः स्फुरद्गुणयुतेषु(षु) नरेषु दोषं
गृह्णन्ति सम्यगवलोक्य गुणान् विहाय ।
केशेषु तारतरमौक्तिकगुम्फितेषु
यूकां वनौकस इवान्तरलीयमानाम् ॥

७४९ आर्योऽपि दोषान् खलवत्परेषां
वक्तुं हि जानाति परं न वक्ति ।
किं काकवत्तीक्ष्णतराननोऽपि
कीरः करोत्यस्थिविघट्टनानि ॥

७५० विद्या विवादाय धनं मदाय
शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्वि[प]रीतमेतज्
ज्ञानाय दानाय च रक्षणाय ॥

७५१ दुर्जनश्च सुजनश्च तावुभौ
दुःखदौ खलु जनस्य जानतः ।
सङ्गमे दहति मानसमेको
विप्रयोगसमये पुनरन्यः ॥

७५२ क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः
स्वार्थो यः (यस्य) पदार्थ एव स पुमानेकः सतामग्रणीः ।
दुःपूरोदरपूरणाय पिबति स्रोतःपतिं वाडवो
जीमूतस्तु निदाघसम्भृतजगत्सन्तापविच्छित्तये ॥

७५३ [1]आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने ।
छेदतापननिकर्षताडनैर्नान्यभावमुपयाति काञ्चनम् ॥

७५४ त्रुट्यति(न्ति)[न] कुपिता अपि
सुजना योगेन मृदूभवन्ति न तु नीचाः ।
हेम्नः कठिनस्यापि
द्रवणोपायोऽस्ति न शिलानाम् ॥

७५५ शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥

७५६ सद्भ्यो न रोचते सा नो रोचन्तेऽप्यसन्त एतस्यै ।
अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम् ॥

—केषामप्येते

७५७ हस्त इव भूतिमलिनो लङ्घयति यथा[यथा]खलः सुजनम् ।
दर्पणमिव तं कुरुते तथा त[था] निर्मलच्छायम् ॥

—सुबन्धोः

७५८ स्वगुणानिव परदोषान्
सतोऽपि वक्तुं न शक्नुवन्ति बुधाः ।
स्वगुणानिव परदोषा-
नसतोऽपि खलास्तु कथयन्ति ॥

—रविगुप्तस्य

७५९ अनुअ(च)रतः खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः ।
विदधाति रन्ध्रमेको गुणवानन्यश्च पिदधाति ॥

—शूचीगोभट्टस्य

---

१. "कीरं तच्च इण स इउअ" इतः परं मूले लिखति ।

७६० जगदुपकृतिषु सतां रतिरितरजनो विभवमात्रसन्तुष्टः ।
भ्रमति भुवनानि भास्वान् धनपतिरधिवसति कैलासम् ॥
—वल्लभदेवस्य

७६१ अहो बत महत्कष्टं विपरीतमिदं जगत् ।
येनापा(प)त्र[प]ते साधुरसाधुस्तेन तुष्यति ॥

*अथ धर्माख्या०, तत्र धर्मप्रशंसा*

७६२ निर्दन्तः करटी हयो गतजवश्चन्द्रं विना शर्वरी
निर्गन्धं कुसुमं सरो गतजलं छायाविहीनस्तरुः ।
रूपं निर्लवणं सुतो गतगुणश्चारित्रहीनो(नः)पति[र्]
निर्देवं भवनं न राजति तथा धर्मं विना मानवः ॥

७६३ धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं
धर्मेणैव भवन्ति निर्मलयशोविद्यामहीसम्पदः ।
कान्तारेषु महाभयेषु सततं धर्मः परित्रायते
धर्मः सम्यगुपासितो हि भवति स्वर्गापवर्गप्रदः ॥

७६४ यन्नागा मदभिन्नगण्डकरटास्तिष्ठन्ति निद्रालसा
द्वारे हेमविभूषिताश्च तुरंगा हेषन्ति यद्दर्पिताः ।
वीणावेणुमृदङ्गशङ्खपणवैः सुप्तश्च यद् बोध्यते
तत्सर्वं सुरलोकराज्यसदृशं धर्मस्य विस्फूर्जितम् ॥

७६५ निवर्तन्ते योधाः स्वभवनमथा(थ)[वा] यान्ति सचिवाः
समूहो यः स्त्रीणां पदमपि च नानुव्रजति सः ।
पुरे पौरास्ते च द्विपहयरथद्रव्यनिचयाः
सुखं तिष्ठन्त्यस्मिन् सुकृतमनुयात्येव पुरुषम् ॥

७६६ द्रव्याणि तिष्ठन्ति गृहेषु नार्यो
विश्रामभूमौ स्वजनः श्मशाने ।
देहश्चितायां परलोकमार्गे
धर्मानुगो याति स एष जीवः ॥

७६७ धर्माद् धनं धनत एव समस्तकामाः
कामेभ्य एव सुखमिन्द्रियजं समस्तम् ।
कार्यार्थिना हि खलु कारणमेषणीयं
धर्मो विधेय इति तत्त्वविदो वदन्ति ॥

—केषामप्येते

७६८ प्रत्यग्रभास्करकरारुणशातकुम्भ-
रत्नावलीकिरणभास्वरभाजनेषु ।
यत्स्वादुहृद्यहितमन्नमनल्पमत्ति
काले जनः प्रिययुतस्तदुशन्ति धर्मात् ॥

—भदन्तकुमारस्य

७६९ ऊर्ध्वबाहुर्विरो(रौ)म्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥

७७० धर्मः सनातनो येषां रक्षणप्रतिभूर्भवेत् ।
परित्यजति किं नाम तेषां मन्दिरमिन्दिरा ॥

७७१ संवर्तसलिलोद्वृत्तनिरङ्कुशविसर्पिणा ।
पुण्यं न क्लेदमायाति चतुःसागरवारिणा ॥

७७२ शिलामयेऽपि प्रासादे शिलैका किल देवता ।
पूज्यः पुण्यमहिम्नैव जडेष्वपि जडश्चिरम् ॥

—आदित्यभट्टस्य

*धर्मात्मप्रशंसा*

७७३ एकस्मिन्नप्यतिक्रान्ते दिने धर्मविवर्जिते ।
दस्युभिर्मुषितस्येव हृदयं दह्यते सतः ॥

७७४ परदारपरद्रोहपरद्रव्यपराङ्मुखम् ।
गङ्गा ब्रूते कदाऽभ्येत्य मामयं पावयिष्यति ॥

७७५ यो न कामान्न संरभान्न द्वेषा[द्]धर्ममुत्सृजेत् ।
यथोक्तकारी सौम्यश्च स सुखं मृत्युमृच्छति ॥

७७६ यज्ञदानतपस्तीर्थसेवाभिर्विजितेन्द्रियः ।
भौमेषु चान्तरिक्षेषु स्वर्गेषु मनुजो व्रजेत् ॥

७७७ वसन्ति सुरलोकेषु निजपुण्यचयैर्नराः ।
विमानैर्विविधाकारैः सर्वकामसमृद्धिभिः ॥

७७८ तेभ्यश्च प्रच्युता राज्ञामन्येषां च महात्मनाम् ।
जायन्ते सुखिनां गेहे सद्वृत्तपरिपालकाः ॥

७७९ आयुर्विनश्यत्ययशो विवर्द्धते
भाग्यं क्षयं यात्यभियाति दुर्गतिः ।
स्वर्गाच्च्यवन्ते पितरः पुरातना
धर्मक्षयो यस्य नरस्य निश्चितम् ॥

७८० वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके च ।
सुप्तं प्रमत्तं विश(ष)मस्थितञ्च
रक्षन्ति पुण्यानि पुराकृतानि ॥

७८१ भीमं वनं भवति तस्य पुरप्रकाशं
सर्वे जनाः सुजनतामुपयान्ति तस्य ।

कृष्टा च भूर्भवति सञ्चितरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥

७८२ धर्मे रतिर्भवतु नः सततोत्थितानां
स ह्येक एव परलोकगतस्य बन्धुः ।
अर्थाः स्त्रियश्च निपुणैरिह सेव्यमाना
नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥

७८३ परधनहरणे पङ्गुः परदारावक्त्रवीक्षणे ह्यन्धः ।
परपरिवादे मूकः स जयति लोके महापुरुषः ॥

इति धर्मप्रकरणम्

*अथाधर्मनिन्दा*

७८४ यद्वैरूप्यमनाथता विकलता नीचे कुले जन्मता
दारिद्र्यं स्वजनाच्च यत्परिभवो मौर्ख्यं परप्रेष्यता ।
तृष्णालौल्यमनिर्वृतिः कुशयनं कुस्त्री कुभोज्यं रुजः
सर्वं पापमहीरुहस्य महतो व्यक्तं फलं दृश्यते ॥

७८५ व्यधिर्वित्त[वि]नाशः प्रियविरहो दुर्भगत्वमुद्वेगः ।
सर्वत्राशाभङ्गः स्फुटं भवन्त्यकृतपुण्यस्य ॥

७८६ अधर्मादेधते लक्ष्मीस्ततो भद्राणि पश्यति ।
ततः स त्रन्जु(?)ते समूलं च विनश्यति ॥

*अधर्मात्मनिन्दा*

७८७ पापिष्ठेन कृतो धर्मो विश्वोपद्रवहेतवे ।
उपोषितस्य व्याघ्रस्य पारणं पशुमारणैः ॥

७८८ यस्य धर्मविहीनस्य दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥

७८९ मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णामपि चैतेषां निःकृतिं नैव शुश्रुमः ॥

७९० अकृतज्ञमकार्यज्ञं दीर्घरोषमनार्जवम् ।
चतुरो विद्धि चाण्डालान्निर्दयं चैव पञ्चमम् ॥

७९१ ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निःकृतिर्विहिता शास्त्रे कृतघ्ने नास्ति निःकृतिः ॥

—नानापुराणेभ्यः

७९२ कथं ते त्यक्तसद्वृत्ताः सुखं रात्रिषु शेरते ।
मरणान्तरिता येषां नरकेषूपपत्र(त्त?)यः ॥

७९३ कतिपयदिनपरमायुषि मदकारिणि यौवने दुरात्मानः ।
विदधति यथापराधं जन्मैव यथा वृथा भवति ॥

—धनदस्यैतौ

*पापनिरूपणम्*

७९४ परदारोपभोगेन यत्पापं समुपार्जितम् ।
न तच्छमयितुं शक्यं प्रायश्चित्तशतैरपि ॥

७९५ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ॥

७९६ र(ऋ)तुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां ब्रू(भ्रू)णहत्यायां युज्यते नात्र संशयः ॥

७९७ कूटसाक्षी मृषावादी यश्चासदनुशास्ति वै ।
ते मोहमृत्यवः सर्वे तथा ये वेदनिन्दकाः ॥

७९८ रौरवं कूटसाक्षी तु याति यश्चानृतो नरः ।
कुम्भीपाकं प्रयात्येव मानवो गुरुतल्पगः ॥

७९९ स्त्रीबालस्वामिमित्रघ्ना गोघ्ना विश्वासघातिनः ।
सुरापो ब्रह्महा चौरो यान्त्येते सर्वनारकान् ॥

८०० असत्प्रतिगृ(ग्र)हीता च नरके यात्यधोमुखे ।
एकोऽनिष्टान्नभुग्यः स याति पूयवहं नरः ॥

८०१ अगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः ।
रुधिरान्तः पतन्त्येते सोमविक्रयिणश्च ये ॥

८०२ मधुहा ग्रामहन्ता तु याति वैतरणीं नरः ।
असिपत्रवनं याति दर्पाद् वननिकृन्तनः ॥

८०३ मृगच्छागादिहन्ता च वह्निज्वाले निपात्यते ।
व्रतलोमाश्रमभ्रष्टो याति संदंशनारके ॥

८०४ सेतुं गत्वा समुद्रस्य गङ्गासागरसङ्गमे ।
ब्रह्महा मुच्यते पापैर्मित्रद्रोही न मुच्यते ॥

८०५ मित्रद्रोही कृतघ्नश्च स्तेयी विश्वासघातकः ।
चत्वारो नरकं यान्ति यावच्चन्द्रो दिवाकरः ॥

*इति पापनिरूपणाख्यानम्*

*अथ उद्यमाख्यानम्* । तत्र, उद्योगप्रशंसा

८०६ नमस्यामो देवान् ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।

फलं कर्मायत्तं यदि किममरैः किञ्च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रतिरनि (रथी?) ॥

८०७ दलन्त्युदिततेजसां रिपुतमःसमूहाः समं
भवन्त्यपि च यद्वशादनिशमर्थसार्थोदयाः ।
तमद्भुतपराक्रमं क्रमनमत्कुलक्ष्माधरं
जगज्जयरसोर्जितं पुरुषकारमेव स्तुमः ॥

८०८ शान्तिस्वस्त्ययनेन शाम्यति नृणां यत्सर्वमौत्पातिकं
यत्पथ्याशनमाशु रोगनिचयानुन्मूलयत्युत्कटान् ।
सद्यः सिद्धरसायनेन पुरुषस्तारुण्यमाप्नोति यत्
तेनार्थः पुरुषार्थ एव जगतामेकातपत्रायते ॥

८०९ आत्मा पुत्रशतैर्धनार्जनधिया मिथ्या किमायास्यते
पङ्गोः श्रीर्गृहमेति लङ्घितभुवो दैवेच्छया निर्धनाः ।
इत्येताः पुरुषार्थमूलहतयः कैश्चित्समुच्चारिता
मुग्धानामलसोत्कटाः प्रतिपदं कुर्वन्ति चित्तभ्रमम् ॥

८१० पूर्वजन्मजनितं पुराविदः कर्म दैवमिति सम्प्रचक्षते ।
उद्यमेन यदुपार्जि[तं] चिराद्दैवमुद्यमवशं न तत्कथम् ॥

८११ सति पुण्यप्रकर्षेऽपि भवति श्रीः समुद्यमात् ।
किं वणिग्विपणिक्षिप्ता हन्त्यजीर्णं हरीतकी ॥

८१२ उद्यमेन हि कार्याणि सिध्यन्ति न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

८१३ न दैवमिति सञ्चिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमिच्छति ॥

*उद्योगिप्रशं[सा]*

८१४. उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥

—कृष्णमिश्रस्य

८१५ अङ्गणवेदी वसुधा कुल्या जलधिः स्थलीव पातालम्।
वल्मीकश्च सुमेरुः कृतिप्रतिज्ञस्य वीरस्य॥

—व(बा)णकवेः

*अलसनिन्दा*

८१६ विहाय पौरुषं यो हि दैवमत्रालम्बते।
प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः॥

८१७ कामपि श्रियमासाद्य यस्तद्वृद्धौ न चेष्टते।
तस्य याति पुनः श्रेयो बीजभोजिकुटुम्बवत्॥

—कयोरप्येतौ

८१८ लज्जेव मधुमत्तस्य कदर्यस्येव धर्मधीः।
अवलिप्तस्य विद्येव नश्यति श्रीः प्रमादिनः॥

क्षेमेन्द्रस्य

*अथ दैवाख्यानम्*

८१९ यत्सेव्यो विकलः कलाशतविदां नालोकयत्याननं
यन्मूर्खेण मनीषिणां विहसता न स्तोत्रमाकर्ण्यते।
यच्च स्वास्थ्यमपथ्यभोजनजुषां यत्सम्पदः पापिनां
तत्सर्वं पुरुषार्थपाटनपटोर्धातुर्विलासायितम्॥

८२० लक्ष्मीकौस्तुभपारिजातसहजः सूनुः सुधाम्भोनिधे-
र्देवेन प्रणयप्रसादविधिना मूर्ध्ना धृतः शम्भुना ।
अद्याप्युज्झति नैव दैवविहितं तैक्ष्ण्यं क्षपानायकः
केनान्येन विलङ्घ्यते विधिगतिः पाषाणरेखासखी ॥

८२१ सम्प्रा[प्या]पि पयोनिधिं न वितृषो जातो जलैर्वाडवो
मेघं प्राप्य न चातकोऽपि तरणिं पादौ न लेभेऽरुणः ।
चन्द्रः शङ्करशेखरेऽपि विलसन्पक्षक्षयी दृश्यते
प्रायः सत्पुरुषाश्रितोऽपि लभते दैवानुकूलं फलम् ॥

८२२ यद् धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ च नातोऽधिकम् ।
तद् धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथा[ः]
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥

८२३ पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।
वर्षा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥

८२४ गुणोऽपि दोषतां याति वक्रीभूते विधातरि ।
सानुकूले पुनस्तस्मिन् दोषोऽपि च गुणायते ॥

८२५ मातरः पितरश्चापि बान्धवाः सुहृदोऽपरे ।
नहि स्मरन्ति स्वजना यस्य दैवमदक्षिणम् ॥

८२६ अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते ॥

८२७ यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥

८२८ नैवाकृतिः फलति नैव कुलं न शीलं
विद्याऽपि नैव[न] च यत्नकृताऽपि सेवा ।
भाग्यानि पूर्वतपसा किल सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥

८२९ मज्जत्वम्भसि यातु मेरुशिखरं शत्रुं जयत्वाहवे
वाणिज्यं कृषिसेवनादिसकला विद्याः कलाः शिक्षतु ।
आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशतो भव्यस्य नाशः कुतः ॥

८३० अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
शैलो मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् ।
वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया
लीलादुर्ललिताद्भुतव्यसनिने दैवाय तस्मै नमः ॥

—केषामप्येते

८३१ अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको गतवयाः ।
अवस्थेयं स्थाणोरपि भवति यत्रामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥

—क्षेमेन्द्रस्य

८३२ प्रियसखि विपद्दण्डप्रान्तप्रपातपरम्परा-
परिचयचले चिन्ताचक्रे विधाय विधिः खलः ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्
भ्रमयति मनो नो जानीमः किमत्र करिष्यति ॥

—विज्जायाः

८३३ भग्नाशस्य करण्डपिण्डिततनोर्ग्लानेन्द्रियस्य क्षुधा
कृत्वाऽऽखुर्विवरं स्वयं निपतितो रात्रौ मुखे भोगिनः ।

तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥

—भर्तृहरेः

८३४ कैवर्त्तकर्कशकरग्रहणच्युतोऽपि
जाले पुनर्निपतितः शफरो वराकः ।
जालात्ततो विगलितो गिलितो बकेन
वामे विधौ बत कुतो व्यसनान्निवृत्तिः ॥

८३५ अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥

८३६ गजभुजङ्गविहङ्गमबन्धनं
शशिदिवाकरयोर्ग्रहपीडनम् ।
मतिमताञ्च विलोक्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥

८३७ यन्मनोरथशतैकगोचरो
यत्स्पृशन्ति न गिरः कवेरपि ।
स्वप्नवृत्तिरपि यत्र दुर्लभा
लीलयैव विदधाति तद् विधिः ॥

केषामप्येते

८३८ प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभू-
न्न पतिष्यतः करसहस्रमपि ॥

—माघस्य

८३९ द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमु[खी]भूतः ॥

—श्रीहर्षस्य

८४० आयूंषि सम्पदो भोगाः पुत्रदारधनानि च ।
दैवेन क्षणमुद्यन्ति क्षणादस्तं व्रजन्ति हि ॥

८४१ किं करोति नरः प्राज्ञः शूरो वाऽप्यथ पण्डितः ।
दैवं यस्य च्छलान्वेषि करोति विफलाः क्रियाः ॥

—चाणक्यस्य

*भाग्यवन्त(वत्)प्रशंसा*

८४२ यावद् भाग्यमहोदयो नहि भवेत्तावन्निरर्था गुणाः
सर्वे वेदविनोदशिल्पकविताचातुर्यशौर्यादयः ।
भाग्ये सत्यपि निर्गुणोऽपि गुणिनामग्रेसरो जायते
मान्यः पूज्यतमः क्षितीशभवने भाग्याय तस्मै नमः ॥

८४३ भाग्यवन्तं प्रसूयेथा मा शूरं मा च पण्डितम् ।
शूराश्च कृतविद्याश्च वने सीदन्ति पाण्डवाः ॥

८४४ कृपणोपार्जिते वित्ते भोगो भाग्यवतां भवेत् ।
दन्ता दलन्ति कष्टेन जिह्वा ग्रसति लीलया ॥

—कयोरप्येतौ

८४५ कष्टा वैधव्यथा कष्टो नित्यश्च वहनक्लमः ।
श्रवणानामलङ्कारः कपोलस्य तु कुण्डलम् ॥

—श्रीमुरारेः

*अथ दुर्भाग्यनिन्दा*

८४६ खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके
वाञ्छन् देशमनातपं विधवशाद् बिल्वस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥
—भर्तृहरेः

*दारिद्र्याख्यानम्*

८४७ उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्यभारं मम
श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन सहसा गत्वा श्मशाने शवो
दारिद्र्यान्मरणं वरं सुखमिति ज्ञात्वैव तूष्णीं(ष्णीं) स्थितः ॥

८४८ क्षुत्क्षामः कुलपुत्रको मम गृहं पृच्छन् कुतोऽप्यागत-
स्तत्किं गेहिनि तेऽस्ति किञ्चिदशनं यच्छामुना भुज्यते ।
- व(वा)चास्तीत्यभिधाय नास्ति च पुनः प्रोक्तं विनैवक्षरैः
स्थूलस्थूलविलोललोचनलुठद्बाष्पाम्भसां बिन्दुभिः ॥

८४९ वासःखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं
रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः ।
दम्पत्योरिति जल्पतोर्निशि यदा चौरः प्रविष्टस्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥

८५० मद्गेहे मुषलीव मूषकवधूर्मूषीव मार्जारिका
मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः ।
मूर्च्छापन्नशिशूनसून् विजहतः सम्प्रेक्ष्य झिल्लीरवै-
र्लूतातन्तुवितानसंवृतमुखी चुल्ही चिरं रोदिति ॥

८५१ तावद् विद्याऽनवद्या प्रभवति सततं तावदाचारधारा
तावद् वैदग्ध्यमुग्धा मधुमधुरपदाडम्बरा वाग्विलासाः ।

यावन्नायान्ति दुःखाकुलसुकुलवधूप्रेरितापत्यवक्त्राद्
रे बाबा नास्ति तैलं न च ल[व]णमिहेत्यादिवाचां प्रचाराः ॥

८५२ अयं शून्यो ग्रामः पुरसदनमेतन्निपतितं
पुरः शुष्का वापी तरुरयमितः शीर्णविटपः ।
वयं चैते पान्थाः परिक्लिशदशा भाग्यवशतः
समानः संयोगः कटुरपि मनो मे रमयति ॥

८५३ अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया ।
अहमपि न तया न तया वद राजन् कस्य दोषोऽयम् ॥

*दरिद्रस्य दोषः*

८५४ सहोदयव्ययाः पञ्च दारिद्र्यस्यानुजीविनः ।
ऋणं दौर्भाग्यमालस्यं बु[भु]क्षा बह्वपत्यता ॥

८५५ उत्पद्यन्ते विलीयन्ते निर्धनानां मनोरथाः ।
बाल्यवैधव्यदग्धानां कुलस्त्रीणां कुचा इव ॥

८५६ हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥

८५७ चाण्डालश्च दरिद्रश्च द्वावेतौ सदृशाविह ।
चाण्डालस्य न गृह्णन्ति न[द]रिद्रो न प्रयछं(च्छ)ति ॥

—केशा(ष)मप्येते

*अथ सम्पदाख्यानम्, तत्र तत्प्रशंसा*

८५८ आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां
मूकत्वं मितभाषितां वितनुते मौग्ध्यं भवेदार्जवम् ।

पात्रापात्रविचारणा विरहिता यच्छत्युदारात्मतां
मां(म)तर्लक्ष्मि तव प्रसादवशतो दोषा अपि स्युर्गुणाः ॥

८५९ कोपस्तेज इति स्थितिर्गृहमिति क्रीडेति दुश्चेष्टितं
माया च व्यवहारकौशलमिति स्वच्छत्वमित्यज्ञता ।
दौर्जन्यं स्फुटवादितेति धनिनामग्रे बुधैर्यद्वशा-
द्दोषोऽपि व्यपदिश्यते गुणतया तस्यै नमोऽस्तु श्रियै ॥

८६० ये शूराः समरे महाकविसभागोष्ठीषु ये वादिनो
ये मानैकधियो मनोरमतया ये कामकीर्तिच्छिदः ।
तेऽप्याज्ञां शिरसा वहन्ति सततं तस्य प्रसन्नः शिवो
यो लक्ष्म्या किल नीलनीरजदृशा विश्रब्धमालोकितः ॥

—केषामप्येते

८६१ जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतां
शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥

—भर्तृहरेः

८६२ त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च ।
तमर्थवन्तं पुनराश्रयन्ते ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥

८६३ समीपे सङ्गीतस्वरमधुरभङ्गी मृगदृशां
विदूरे दानान्धद्विरदकलहोद्दामनिनदः ।
बहिर्द्वारे तेषां भवति हयहेशा(ष)कलकलो
दृगेशा(षा)ते येषामुपरि कमले देवि सदया ॥

८६४ उरस्यस्य भ्रश्य(श्य)त्कबरभरनिर्यत्सुमनसः
पतन्ति स्वर्बालाः स्मरपरवशा दीनमनसः ।

सुरास्तं गायन्ति स्फुरिततनुगङ्गाधरमुखा-
स्तवायं दृक्पातो यदुपरि कृपातो विलसति ॥

—पण्डितराजापरनाम्नो जगन्नाथकवेरेतौ

८६५ तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः क्षणेन
सोऽप्यन्य एव भवतीति विचित्रमेतत् ॥

—क्षेमेन्द्रस्य

८६६ यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥

—भर्तृहरेः

८६७ विद्वान् सुभगो मानी विधृ(श्रु?)तकीर्तिः कुलोन्नतः शूरः ।
वित्तेन भवति सर्वो वित्त[वि]हीनस्तु सद्‌गुणोऽप्यगुणः ॥

—कयोरपि

८६८ धनमर्जय काकुस्थ धनमूलमिदं जगत् ।
अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥

—वाशिष्ठात्

८६९ न नरस्य नरो दासः किन्तु द्रव्यस्य निश्चितम् ।
गौरवं लाघवं चापि धनाधननिबन्धनम् ॥

***धनिप्रशंसा***

८७० ब्रह्महाऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
ब्रह्मणस्तुल्यवंशोऽपि निर्धनः किल निन्द्यते ॥

८७१ पण्डिताः कवयः शूराः कलावन्तस्तपस्विनः ।
वैद्यस्येव सवित्तस्य वीक्षन्ते मुखमातुराः ॥

८७२ हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य ।
अप्यतिपरुषमसत्यं पूज्यं वाक्यं सम(मृ)द्धस्य ॥

—क्षेमेन्द्रस्य

८७३ वयोवृद्धास्तपोवृद्धाः ज्ञानवृद्धाश्च ये परे ।
सर्वे ते धनवृद्धस्य द्वारि तिष्ठन्ति किङ्कराः ॥

८७४ गुणयुक्तोऽप्यधो याति रिक्तः कूपे घटो यथा ।
निर्गुणोऽपि भृतः पश्य जनैः शिरसि धार्यते ॥

८७५ धिगेताः सद्विद्या धिगपि कवितां धिक् सुजनतां
वयोरूपं धिग् धिग् धिगपि च यशो निर्धनवतः ।
असौ जीयादेकः सकलगुणहीनोऽपि धनवान्
बहिर्द्वारे यस्य तृणलवसमाः सन्ति गुणिनः ॥

*सम्पन्निन्दा*

८७६ तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न सन्तिष्ठते
मूर्खं द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरे च वेशवनिता दुःखोपचर्या भृशम् ॥

—विशाखदेवस्य

८७७ चलत्वमुच्चैःश्रवसस्तुरङ्गमाद्व वक्रत्वमिन्दोर्विषतो विमोहः ।
एतत्त्वयाऽशिक्षि सहोदरेभ्यः कुतो न जाने विदुषा विरोधः ॥

८७८ अर्जुनीयति यदर्जुने जनो
वर्जनीयजनसेवनादिभिः ।

मंक्षु नश्यति चिराय सञ्चिता
वञ्चिता(तो) जगति को न सम्पदा ॥

८७९ लक्ष्मीर्यादोनिधेर्यादो नादो वादोचितं वचः ।
बिभ्यती धीवरेभ्यश्च जडेष्वेव निमज्जति ॥

८८० गुणिनं जनमालोक्य निजवन्धनशङ्कया ।
राजन् लक्ष्मीः कुरङ्गीव दूरं दूरं पलायते ॥

८८१ या स्वसद्मनि पद्मेऽपि सन्ध्यावधि विजृम्भते ।
इन्दिरामन्दिरेऽन्येषां कथं स्थास्यति सा चिरम् ॥

८८२ अशठमलोलमजिह्मं त्यागिनमनुरागिणं विशेषज्ञम् ।
यदि नाश्रयति नरं श्रीः श्रीरेव हि वञ्चिता तत्र ॥

८८३ कुतोऽप्यागत्य घटते विघट्य क्वापि गच्छति ।
न लक्ष्यते गतिः सम्यग् धनस्य च घनस्य च ॥

—केषामप्येते

*धनिकनिन्दा*

८८४ पङ्गो लब्धवरोऽसि यन्न विभवक्षीबोऽनुयातस्त्वया
मूक प्राप्तफलोऽसि यन्न धनिनां जानासि वक्तुं प्रियम् ।
लब्धार्थोऽसि न यच्छृणोसि बधिर श्रीगर्वितानां गिरो
भ्रूभङ्गं न यदीक्षसे धनम(व)तां तेनान्ध धन्यो भवान् ॥

८८५ आपद्गतं हससि किं द्रविणान्ध मूढ
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
किं त्वं न पश्यसि घटीर्जलयन्त्रमध्ये
रिक्ता भवन्ति भरिताः पुनरेव रिक्ताः ॥

८८६ द्विजवरवितरणसमये वदन्ति धननास्तितां मदोन्मत्ताः ।
देहोपयोगकरणे नीचवितरणे [च] नास्तितता नास्ति ॥

८८७ प्रायेण धनिनामेव धने तृष्णा गरीयसी ।
पश्य कोटिद्वयोपेतं लक्षाय प्रगुणं धनुः ॥

८८८ भक्ते द्वेषो जडे प्रीतिररुचिर्गुरुलङ्घनम् ।
मुखे कटुकता नित्यं धनिनां ज्वरिणामिव ॥

८८९ असतः श्रीमदान्धस्य दारिद्र्यं परमाञ्जनम् ।
आत्मौपम्येन भूतानि दरिद्रः पुनरीक्षते ॥

८९० उत्पाद्य कृत्रिमान् दोषान् धनी सर्वत्र बाध्यते ।
कृतदोषसहस्रोऽपि निर्धनः परमेश्वरः ॥

८९१ यथाऽऽमिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥

८९२ पतन्ति खड्गधारासु विशन्ति मकरालयम् ।
किं न कुर्वन्ति राजेन्द्र कष्टमर्थार्थिनो जनाः ॥

*अथ दानाख्यानम् । तत्र दानप्रशंसा*

८९३ देयं भोज धनं धनं सुकृतिना नो सं(शं)[क]नीयं कदा
श्रीकर्णस्य बलेश्च विक्रमनृपस्याद्यापि कीर्तिः स्थिरा ।
अस्माकं मधु दानभोगरहितं नष्टं चिरात्सञ्चितं
निर्वेदादिव पाणिपादयुगलं घर्षन्त्यहो मक्षिकाः ॥

८९४ दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यन्ति नाशम् ।
परोऽपि बन्धुत्वमुपैति दानात् तस्माद्धि दानं सततं प्रदेयम् ॥

८९५ गौरवं प्राप्यते दानान्न तद् वित्तस्य सङ्ग्रहात् ।
स्थितिरुच्चै[ः] पयोदानां पयोधीनामधः पुनः ॥

८९६ धनिनां दानहीनानां जीवितान्मरणं वरम् ।
आर्तत्राणविहीनानां गार्हस्थ्याद् भिक्षुता वरम् ॥

—केषामप्येते

८९७ अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम् ।
योऽपि ददाति शरीरं स ददाति [न] वित्तले[श]मपि ॥

—क्षेमेन्द्रस्य

८९८ बोधयन्ति न याचन्ते भिक्षाचारा गृहे गृहे ।
दीयतां दीयतां नित्यमदातुः फलमीदृशम् ॥

८९९ यद्ददासि विशिष्टेभ्यो यद्वाऽश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षा(क्ष)सि ॥

—भगवतो व्यासस्य

*उदारप्रशंसा*

९०० धातस्तात समस्तयाचकजने वैरायसे निर्दयो
यस्माद् विक्रमशालिवाहननृपश्रीमञ्चु(मुञ्ज?)भोजादयः ।
अत्यन्तं चिरजीविनो न विहितास्ते विश्वजीवातवो
मार्कण्डध्रुवलोमशप्रभृतयः सृष्टा प्रभूतायुषः ॥

९०१ आरोहन्ति सुखासनान्यपटवो नागान्ह(ह्व)यान्सेवका-
स्तांबु(बू)लाद्युपभुञ्जते नटविटाः स्वादन्ति हस्त्यादयः ।
प्रासादे चटकादयोऽपि निवसन्त्येते न पात्रं स्तुतेः
स स्तुत्यो भुवने प्रयच्छति कृती लोकाय यः कामितम् ॥

९०२ चातकस्त्रिचतुरान् पयःकणान् याचते जलधरं पिपासया।
सोऽपि पूरयति विश्वमम्भसा हन्त हन्त [महता]मुदारता॥

९०३ कियती पञ्चसहस्री कियती लक्षाऽपि कोटिरपि की(कि)यती।
औदार्योन्नतमनसां रत्नवती वसुमती कियती॥

९०४ अदाता पुरुषस्त्यागी धनं सन्त्यज्य गच्छति।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति॥

९०५ रक्षन्ति कृपणाः पाणौ द्रव्यं क्रव्यमिवात्मनः।
तदेव सन्तः सततमुत्सृजन्ति मलं यथा॥

९०६ दातैव याचकैर्याच्यः क्षीणवित्तोऽपि सर्वदा।
शुष्कोऽपि हि नदीपूरः कवन्यते(?) सलिलार्थिभिः॥

९०७ लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः।
धन्यो बलिः स येनास्य भिक्षापात्रीकृतः करः॥

९०८ कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः।
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम्॥

९०९ आकारमात्रविज्ञातसम्पादितमनोरथाः।
ते धन्या ये न शृण्वन्ति दीनाः प्रणयिनां गिरः॥

९१० एकेन तिष्ठताऽधस्तादन्येनोपरि तिष्ठता।
दातृयाचकयोर्भावः कराभ्यामेव सूचितः॥

९११ दाता नीचोऽपि सेव्यः स्याददाता न महानपि।
जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निसे(षे)वते॥

९१२ देहि देहीति जल्पन्ति त्यागिनोऽप्यर्थिनोऽपि च।
आलोकयन्ति रभसादस्ति नास्तीति न क्वचित्॥

९१३ गेहे गेहे कलौ काव्यं श्रोता तस्य पुरे पुरे ।
देशे देशे भयत्राता दाता ज[ग]ति दुर्लभः ॥

त(स)दुक्तिः (?)

९१४ शय्या शाड्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलब्धराज्यविभवे दोषोऽयमेको वने
दुःप्रापार्थिनि यत्परार्थघटनाशू ये मृषा स्थीयते ॥

९१५ किं तया क्रियते लक्ष्म्या या वधूरिव गोपिता ।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥

९१६ यदर्ज्यते परिक्लेशैरर्जितं यन्न भुज्यते ।
विभज्यते तदन्तेऽन्यैः कस्यचिन्माऽस्तु तद्धनम् ॥

—क्षेमेन्द्रस्यायम्

कृपणनिन्दा

९१७ निद्राछेदसखेदबान्धवजनः सोद्वेगवैद्योज्झितः
पक्वक्वाथकदर्थितः परिजनैस्तन्द्राभयात् क्षोभितः ।
लग्नस्वास्थ्यमनोरथाः(थः) प्रियतमावष्टब्धपादद्वयः
पर्यङ्के विवशः करोति कृपणः किं शल्यतुल्यैर्धनैः ॥

९१८ विकचकचकलापः किञ्चिदाकुञ्चितोऽयं
कुचकलशनिवेशः शोभते श्यामलाद्याः ।
मधुरसपरितोषात् किञ्चिदुत्फुल्लकोशे
कमल इव निलीनः पेटकः षत्प(ट्प)दानाम् ॥

—बाणस्य

९१९ दधिमथनविलोलल्लोलदृग्वेणिदम्भा-
दयमदयमनङ्गो विश्वविश्वैकजेता ।

भवपरिभवकोपात् व्यक्तबाणः कृपाण-
श्रममिव दिवसानौ(?) व्यक्तशक्तिर्व्यनक्ति ॥

—असरसीठकुरस्य

९२० पर्णादिशः पाणिपुटावरुद्धा वेणी विरेजे शयनोत्थितायाः ।
सरोजकोशादिव निःसरन्ती श्रेणी घनीभूय मधुव्रतानाम् ॥

९२१ वेणी विरेजे मृगलोचनायाः कठोरपीनस्थलमण्ड[ल]स्था ।
सुवर्णकुम्भावमृतेन पूर्णौ रक्षन्महासर्प इवाधितृष्णः ॥

९२२ विरञ्चिरस्या निरमाय मान्त-
मंतेषु(?) शृङ्गाररसं सुकेश्याः ।
स्निग्धोल्लसत्कुन्तलकैतवेन
निधा[न]मूर्ध्नि स्तव्य(ब)कीचकार ॥

*सीमन्ततिलकौ*

९२३ अदूरे सिन्दूरव्यतिकरितसीमन्तकरणे-
रधस्तस्या रेजे मलयजरजो बिन्दुतिलकः ।
जनानां भाविन्याः सततमतनून्मादविपदः
प्रमाहेतुः केतुः किमयमुदितो लोहितशिखः ॥

—कोकपण्डितस्य

९२४ विराजतेऽस्यास्तिलकोऽयमञ्चितो
विकुञ्चितभ्रूलतिकाद्वयान्तरे ।
विजित्य लोकद्वितयं दिवं प्रति
स्मरेण बाणो धनुषिवि(षीव) योजितः ॥

९२५ वीणेव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः ।
व्यसोः कुसुममालेव श्रीः कदर्यस्य निःफला ॥

९२६ यत्करोत्यरुचिं क्लेशं तृष्णां मोहं प्रजागरम् ।
तद् धनं न कदर्याणां हृदयव्याधिरेव सः ॥

९२७ उक्तं परस्यामिषतामनुक्तं यात्यदृश्यताम् ।
हृदये शल्यमाधत्ते निधने धनिनां धनम् ॥

९२८ व्यर्थं श्रुतमबोधस्य बलं कापुरुषस्य च ।
व्युत्थानं मन्दभाग्यस्य धनं कृपणजीविनः ॥

—क्षेमेन्द्रस्यैते

९२९ कृपणेन शवेनेव मृतेनापि न दीयते ।
मांसं वर्द्धयता तेन काकस्योपकृतिः कृता ॥

९३० गाढतरबद्धमुष्टेः कोशनि[ष]ण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥

९३१ प्राप्तानपि न लभन्ते भोगान् भोक्तुं स्वकर्मभिः कृपणाः ।
द्राक्षाप्रपाकसमये मुखपाको भवति काकानाम् ॥

—रविगुप्तस्य

९३२ शरणं किं प्रपन्नानि विष[व]न्मारयदि(न्ति) किम् ।
न त्यजं(ज्यं)ते न भुज्यन्ते कृपणेन धनानि यत् ॥

—रिंसुकस्य

९३३ केऽपि स्वभावलुब्धास्तीव्रतरां यातनामपि सहन्ते ।
न तु सन्त्यजन्ति वित्तं मात्सर्यमिवाधमाः सततम् ॥

९३४ योऽपि न ददाति भुङ्क्ते
सति विभवे नैव तस्य तद् द्रव्यम् ।
तृणमयकृत्रिमपुरुषो
रक्षति सस्यं परस्यार्थे ॥

९३५ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
योऽन ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥

९३६ चत्वारो धनदायादा धर्मचौराग्निपार्थिवाः ।
ज्येष्ठावमानिनो ये वै तेभ्यः क्रुद्धास्त्रयोऽनुजाः ॥

९३७ त्यागभोगविहे(ही)नेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥

९३८ उदारचरितस्त्यागी याचितः कृपणो भृशम् ।
एको धनं ततः प्राणानन्यः प्राणांस्ततो धनम् ॥

९३९ पाण्डित्यं न शृणोत्येव कृपणः कीर्तिवर्जितः ।
नपुंसकः किं कुरुते पुरःस्थितमृगीदृशम्(शः?) ॥

—केषामप्येते

९४० मृत्युः शरीरगोप्तारं वसुरक्षं वसुन्धरा ।
दुश्चारिणीव हसती(ति)स्वपतिं पुत्रवत्सलम् ॥

९४१ कृपणेन समो दाता न भूतो न भविष्यति ।
अस्पृश्य(श)न्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥

—भगवतो व्यासस्य

*याचकनिन्दा*

९४२ वक्त्रादुद्वस मे हठादधिवस त्वं वाणि वक्त्रं मना-
गीशानां तव च क्रुधा भजतु मां लक्ष्मीरिमानुज्झतु ।
पश्चात्तेषु पठत्सु मां प्रति यशो गाथावलीं तृष्णया
वक्त्रं मय्यथ वक्रयत्यनुभवन्त्वेतेऽपि तां यातनाम् ॥

—कस्यापि

९४३ जनस्थाने भ्रान्तं कनकमृगतृष्णाञ्चितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥

—वाचस्पतिभट्टस्य

९४४ अर्था न सन्ति न च मुञ्चति मां दुराषा(शा)
त्यागान्न सङ्कुचति दुर्ललितं मनो मे ।
याच्ञा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किन्तु विलम्बितेन ॥

—माघकवेः

९४५ दी(दे)हीति वक्तुकामस्य यद् दुःखमुपजायते ।
दाता चेत् तद् विजानीयाद् दद्यात् स्वपिशितान्यपि ॥

९४६ अदृष्टमुखभङ्गस्य वरमन्धस्य याचितुम् ।
अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥

९४७ दक्षिणाशाप्रवृत्तस्य प्रसारितकरस्य च ।
तेजस्तेजस्विनोऽर्कस्य क्षीयतेऽन्यस्य का कथा ॥

९४८ नवीनदीनभावस्य याचमानस्य मानिनः ।
वचोजीवितयोरासीत् पुरो निःसरणे रणः ॥

९४९ विद्यावतः कुलीनस्य धनं याचितुमिच्छतः ।
कण्ठे पारावतस्येव वाक् करोति गतागतम् ॥

*अथ मनस्विप्रशंसा*

९५० क्वचित् कन्थाधारी क्वचिदपि च दिव्याम्बरधरः
क्वचिद् भूमौ शायी क्वचिदपि च पर्यङ्कशयनः ।

क्वचिच्छाकाहारः क्वचिदपि च मिष्टाशनरुचि-
र्मनस्वी कार्यार्थी न गण[य]ति दुःखं न च सुखम् ॥

९५१ पुण्ये ग्रामे वने वा महति सितपट्ट(ट)च्छन्नपालीं कपाली-
मादाय न्यायगर्भं द्विजहुतहुतभुग् धूमधूम्रोपकण्ठम् ।
द्वारं द्वारं प्रवृत्तो दरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणी स्वदेशे न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥

९५२ कुसुमस्तवकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥

—भर्तृहरेरेते

९५३ अत्यन्तविमुखे दैवे व्यर्थयत्येव पौरुषम् ।
मनस्विनो दरिद्रस्य वदान्यस्य कुतः सुखम् ॥

९५४ पुंसामुन्नतचित्तानां सुखावहमिदं द्वयम् ।
सर्वसङ्गनिवृत्तिर्वा सम्पत्तिर्वा सुविस्तृ(स्तृ)ता ॥

—भगवतो व्यासस्यैतौ

९५५ वनेऽपि सिंहा[ः] करिमांसभक्षका
बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता
न नीचकार्याणि समाचरन्ति ॥

९५६ अर्थः सुखं कीर्तिरपीह मा भू-
दनर्थ एवास्तु तथापि धीराः ।
निजप्रतिज्ञामनुरुन्धमाना
महोद्यमाः कर्म समारभन्ते ॥

९५७ मानमुद्वहतां पुंसां सम्पत्तिः स्यात्पदे पदे ।
मानहीनं सुरैः सार्द्धं विमानमपि सन्त्यजेत् ॥

९५८ ब्रूत नूत[न]कूष्माण्डफलानां के भवन्त्यमी ।
अङ्गुलीदर्शनादेव व्य(वि)लीयन्ते मनस्विनः ॥

९५९ कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
धनिषु न दैन्यं विदधति ते किल पशवो वयं सुधियः ॥

९६० नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः ।
येषां भुव[न]लाभेऽपि निःसीमानो मनोरथाः ॥

९६१ वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥

—केषामप्येते

९६२ अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥

—भारवेः

९६३ मा तं म्लानिमुपागते गुणमणौ गीर्णे गते गौरवे
प्रागल्भ्ये प्रलयं गते बत महागर्वेऽपि निर्वापिते ।
धिक्कारेऽङ्कुरिते कुतोऽपि विदुषां स्यादर्थलाभस्ततो
हा हा धिङ् नरकार्णवस्थितिरहो धन्येति मन्यामहे ॥

९६४ मनस्वी म्री(म्रि)यते कामं कार्पण्यं न तु गच्छति ।
अपि निर्वाणमायाति नानलो याति शीतताम् ॥

९६५ पादाहतं यदुत्थाय मूर्द्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥

९६६ उड्डीना गुणपत्रिणः सुखफलान्याराद् विशीर्णान्यधः
पर्यस्ताः परितो यशःस्तबकिताः सम्पल्लवाः पल्लवाः ।

प्रागेव प्रसृतः प्रमोदहरिणश्छाया कथान्तं गता
दैन्यारण्यमतङ्गजेन बलिना भग्नेऽपि मानद्रुमे ॥

—कस्यापि

९६७ मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः

—माघस्यैतौ

*तेजस्विप्रशंसा*

९६८ न [तेजस्] तेजस्वी प्रसृत रेषां विषहते
स तस्य स्वो भावः प्रकृतिनि॰ वादविकृतः ।
मयूखैरश्रान्तस्तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजो विकरति ॥

—भवभूतेः

९६९ सामोपायनयप्रपञ्चपटवः प्रायेण ये भीरवः
शूराणां व्यवसाय एव हि परं संसिद्धये कारणम् ।
विस्फूर्जद्विकटाटवीगजघटाकुम्भैकसञ्चूर्णन-
व्यापारैकरसस्य सन्ति विजये सिंहस्य के मन्त्रिणः ॥

९७० तेजांसि यस्य प्रशमं प्रयान्ति धाराप्रहारेण स वह्निरन्यः ।
अयं पुनर्वाडवनामधेयः समुद्रमापीय बिभर्ति तेजः ॥

९७१ सिंहः शिशुरपि निपतति मदमलिनकपोलपालिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥

९७२ तेजस्विनि क्षमासारे नातिकार्कश्यमाचरेत् ।
अतिनिर्मथनादग्निश्चन्दना[द्]पि जायते ॥

—केषामप्येते

९७३ असमानमिवौजांसि सभायां गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥

—भारवेः

*अतेजस्विनिन्दा*

९७४ तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।
हिमांशुमाशु ग्रसते तन्म्र[दि]म्नः फलं स्फुटम् ॥

—माघस्य

९७५ मौनी पादप्रहारेऽपिं न क्षमी नीच एव सः ।
आकृष्टशस्त्रो मित्रेऽपि न तेजस्वी खलो हि सः ॥

—क्षेमेन्द्रस्य

*क्षमावत्प्रशंसा*

९७६ अशक्तो यः क्षान्तिं सततमपकारिण्यपि जने
विधत्ते सोऽवश्यं भुजग इव दंष्ट्राविरहितः ।
प्रभुः सत्यां शक्तौ क्षमत इह यस्मात्सुचरितः
स तेजस्वी लोकद्वितयविजिगीषुर्विजयते ॥

—क्षेमसिंहाचार्यस्य

९७७ अलङ्क्रियास(श)क्तिसमन्वितानां
तपोधनानां बलशक्तिरग्र्या ।
व्यापाददावानलवारिधारा
प्रेत्येह च क्षान्तिरनर्थशान्तिः ॥

—कस्यापि

९७८ मन्निन्दया यदि जनः परितोषमेति
नन्वप्रयासजनितोऽयमनुग्रहो मे ।

श्रेयोऽर्थिनो हि पुरुषाः परितुष्टिहेतो-
र्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥

९७९ यथा ममात्मप्रियसम्पदुद्यम-
स्तथा परेषामपि वा विषो(शे)षतः ।
अवाप्नुयुश्चेन्मदभिप्लवात्प्रियं
न ते चरेयुः कथमात्मनः प्रियम् ॥

—ज्ञानाङ्कुरस्यैतौ

९८० एकः क्षमाकृतां दोषो द्वितीयो नोपपद्यते ।
येनेमं क्षमया युक्तमशक्तं मन्यते जनः ॥

—भगवतो व्यासस्य

*दयाख्यानम्*

९८१ यदि ग्रावा तोये तरति तरणिर्यद्युदयति
प्रतीच्यां सप्तार्चिर्यदि भवति शीतः कथमपि ।
यदि क्ष्मापीठं स्यादुपरि सकलस्यापि जगतः
प्रसूते सत्त्वानां तदपि न वधः क्वापि सुकृतम् ॥

९८२ क्रीडाभूः सुकृतस्य दुःकृतरजःसंहारवात्या भवो-
दन्वन्नौर्व्यसनाग्निमेघपटली सङ्केतदूती श्रियाम् ।
निःश्रेणिस्त्रिदिवौकसः प्रियसखी मुक्तेः कुगत्यर्गला
सत्त्वेषु क्रियतां कृपैव विविधैः किन्तैस्तपःप्रक्रमैः ॥

—बोधिसत्त्वस्यैतौ

*सेवकनिन्दा*

उन्नत्यै नयत(ति) प्रभुं प्रभुगृहाद् द्रष्टुं बहिस्तिष्ठति
स्वद्रव्यव्ययमातनोति जडधीरागामिवित्तेच्छया ।

प्राणान् प्रापितुमेव मुञ्चति रणे तृष्णातिभोगेच्छया
सर्वं तद्विपरीतमेव कुरुते तृष्णान्धदृक् सेवकः ॥

९८४ प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूर्खः सेवकादन्यः ॥

९८५ रे लज्जे मज्ज मज्ज क्वचिदपि पुरतस्तिष्ठ तिष्ठ प्रतिष्ठे
याहि द्रोणिं हिमाद्रेः पुनरपि तपसे भारति स्वस्ति तुभ्यम् ।
सोऽहं पुण्यक्षयेण प्रचुरपरिभवातङ्किनि भ्रष्टशङ्के
सेवापङ्के पतामि द्रविणकणधिया निःकृपाणां नृपाणाम् ॥

९८६ वयमकुशलाः कर्णोपान्ते निवेशयितुं मुखं
कृतकवचनैर्भर्तुश्चेतो न वञ्चयितुं क्षमाः ।
प्रियमपि वचो मिथ्या वक्तुं जडैर्न च शिक्षितुं
ननु हतगुणैः कैस्तोष्यामो नरेश्वरवल्लभम् ॥

९८७ अनिद्रो दुःस्वप्नः प्रपतनमनद्रिद्रुमतटं
जराहीनः कम्पस्तिमिररहितस्त्राससमयः ।
अनाघात(?)दुःखं विगतनिगडो बन्धनविधिः
सजीवं जन्तूनां मरणमवनाशाश्रयरसः ॥

—केषामप्येते

९८८ ईश्वरमाराधयतो विगलितमानस्य लब्धुमैश्वर्यम् ।
स्फुटमेव भवति लघिमा गरिमाऽपि कथं न जानीमः ॥

—वल्लभदेवस्य

९८९ सेवां वञ्चकधूर्तानां कुरुते न सतां जडः ।
यातीष्टतां पदोच्छिष्टा नष्टा स्त्री न सती नृणाम् ॥

—क्षेमेन्द्रस्य

९९० सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वायत्तं यच्छरीरं स्यान्मूढैस्तदपि हारितम् ॥

९९१ वरं विषादनं भैक्ष्यं वरं भोगोपजीवनम् ।
पुंसां विवेकयुक्तानां सेवया धननार्जनम्(?) ॥

९९२ जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥

—भगवतो व्यासस्य

*मित्राख्यानम्*

९९३ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनास्तदभवद् दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मै[त्री]पुनस्त्वीदृशी ॥

—भर्तृहरेः

९९४ कीरंती व्विअ णासइ उअये रेहव्व खलयणे मित्ती ।
सा उण सुयणह्मि(म्मि)किया अणहा पाहाणरेह व्व ॥

—कस्यापि

९९५ उपनमितं पुण्यचयैः सम्पूर्णं रक्षितञ्च यत्नेन ।
सम्पदि विपदि त्राणं भवति निधानञ्च मित्रञ्च ॥

—कस्या०

९९६ शोकारातिपरित्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥

—बहिलस्य

९९७ अहितात्प्रतिशे(षे)धश्च हिते चानुप्रवर्तनम् ।
व्यसने चापरित्यागस्त्रिविधं मित्रलक्षणम् ॥

९९८ दर्शितानि कलत्राणि गृहे भुक्तमशङ्कितम् ।
कथितानि रहस्यानि सौहृदं किमतः परम् ॥

—भगवतो व्यासस्य

९९९ न मातरि न दारेषु न सोदर्येषु बन्धुषु ।
विश्रम्भस्तादृशः पुंसां यादृङ् मित्रे निरन्तरे ॥

*अपत्याख्यानम्*

१००० आयातो भवतः पितेति सहसा मातुर्निशम्योदितं
धूलीधूसरितो विहाय शिशुभिः क्रीडारसांस्तु द्रुतम् ।
दूरात्स्मेरमुखः प्रसार्य ललितं बाहुद्वयं बालको
नाधन्यस्य पुरः परैति परया प्रीत्य(त्या)रणन् घर्घरः ॥

—खोखटभट्टस्य

१००१ द्वित्राणि स्खलता पदानि ददता धात्रीकरालम्बिना
स्वभ्यस्तं पुनरेव जातु गमनं निःशङ्कमातन्वता ।
उद्भिन्नामलदन्तकुड्मलमुखेनाव्यक्तवाग्वादिना
या प्रीतिः स्वसुतेन चेतसि खले(?)वक्तुं न सा पार्यते ॥

—जनार्दनभट्टस्य

१००२ आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरचनावचनप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा परुषीभवन्ति ॥

—भवभूतेः

*अथ कलिवर्णनम्*

१००३ न देवे देवत्वं कपटपटवस्तापसजना
जनो मिथ्यावादी विरलतरवृष्टिर्जलधरः ।
प्रसङ्गो नीचानामवनिपतयो नीचमतयो
जनाः शिष्टा नष्टाः किमिहि कलिकाले विलसति ॥

१००४ गता गीता नाशं सकलनिगमो दूरत(मग)मद्
विनष्टाः स्मृत्यर्थाः क्वचिदपि पुराणं व्यपगतम् ।
इदानीं रई(रै)दासप्रभृतिवचनैर्मोक्षपदवी
न जाने को हेतुः शिव शिव कलेरेष महिमा ॥

१००५ धर्मः पर्वगतस्तप[ः] प्रचलितं सत्यञ्च दूरे गतं
पृथ्वी मन्दफला नृपाः कपटिनो लाटग्र(?)गता वाडवाः ।
नद्यः स्तोकजलास्त्वकालमरणं पाखण्डधर्मे रतिः
साधुः सीदति दुर्जनः प्रभवति प्रायः प्रविष्टे कलौ ॥

१००६ निःसारा पृथिवी निरौषधिता(!) नीचा महत्त्वं गता
भार्या भर्तृषु भूरिवैरनिरता[ः] पुत्राः पितृद्वेषिणः ।
राजानोऽर्थपरायणाः प्रतिदिनं विप्रा विकर्मस्थिता
ह्येवं भाभि(?)सदा जगत् कलियुगे धर्मो वनान्तं गतः ॥

—केषामप्येते

१००७ अदयहृदया लोकाः शोकाकुलं यमिनां कुलं
विततमनृतं नित्यं सत्यं कुतोऽपि कुतो गतम् ।
कलुषकलिता योषा''बिलं वसुधातलं
विगतविभवाः सन्तोऽसन्तः कलौ सकलौजसः ॥

—हरिकवेर्ममायम्

१००८ श्रुतीनामुच्छेदं स्मृतिविवशतां दर्शनपथे-
ष्वसा[म]र्थ्यं धत्ते द्विजनिवहमुन्मूलयति यत् ।
विवेकं वर्णानामपनुदति नैवाश्रमकथा
वयस्तुर्यं नृणां कलियुगमिवाभ्येति विषमम् ॥

—नन्दपण्डितानाम्

१००९ निर्दग्धाः कुसुमाकराः सुमनसो मम्लुः कलावानपि
प्रीत्यै नो किल कृष्णवर्त्मसु जनाः प्रायेण बद्धादराः ।
जाड्येनोल्लसितं जगत्सुमहती मित्रेपि यन्मन्दता
तन्नूनं कलिरेष दुःसहतरः शीतर्तुना स्पर्द्धते ॥

१०१० विधत्ते यत्तोषं जलपरिचितिर्गोपतिकराः
कठोरा जायन्ते कथमपि न तृष्णा विरमति ।
मुदे दोषारम्भो भवति भुवि वैरस्यघटना
किमेश(ष) ग्रीष्मर्तुर्न किल कलिकालं तुलयति ॥

२०११ सर्वत्रोद्गतकन्दला वसुमती वृद्धिर्जलानां परा
जातं निःकमलं जगत्सुमलिनैर्लब्धा घनैरुन्नतिः ।
सर्पन्ति प्रतिमन्द(न्दि)रं द्विरसनाः संत्यक्तमार्गा जना
वर्षाणाञ्च कलेश्च सम्प्रति जयत्येकैव राज्यस्थितिः ॥

—श्रीगदाधरचरणानामेते

१०१२ यस्मिन् वेदविचारणा विगलिता नो भव्यकाव्यादरो
दूरादेव दुरूहकाव्यविषमाः सीदन्ति तर्कादयः ।
नित्यं निर्भरनीचसेवनचयोदञ्चन्मितार्थागमः
कालः सोऽयमनक्षरक्षितिसुरक्षेमावहो वर्तते ॥

१०१३ दाता दरिद्रः कृपणो धनाढ्यः पापी चिरायुः सुकृती गतायुः ।
परेषु सख्यं स्वजनेषु वैरं पश्यन्तु लोकाः कलिकौतुकानि ॥
—कयोरप्येतौ

*अथ कळाख्यानम्*

१०१४ धर्मस्य कला ज्येष्ठा भूतदयाख्या परोपकारश्च ।
दानं क्षमाऽनु(न)सूया सत्यमलोभः प्रसादश्च ॥

१०१५ अर्थस्य सदोत्थानं नियमात् परिपालनं विवृद्धिश्च ।
स्थाने त्यागः पटुताऽनुद्वेगः स्त्रीष्वविश्वासः ॥

१०१६ कामस्य वेशशोभे पेशलता चारुता गुणोत्कर्षः ।
प्रीतिः प्रणयो लीला चित्तज्ञानञ्च कान्तानाम् ॥

१०१७ मोक्षस्य विवेक इति प्रशमस्तृष्णाक्षयश्च सन्तोषः ।
सङ्गत्यागश्च लयः साम्यं परमप्रकाशश्च ॥

१०१८ मात्सर्यपरित्यागः प्रियवादित्वञ्च धैर्यमक्रोधः ।
नैराश्यञ्च परार्थे सुखस्य सिद्धाः कलाः पञ्च ॥

१०१९ सत्सङ्गः कामजयः शौचं गुरुसेवनं सदाचारः ।
श्रुतममलं यशसि रतिर्मूलकलाः सप्त शीलस्य ॥

१०२० ओजः सत्त्वं बुद्धिर्व्यवसायो नीतिरिङ्गितज्ञानम् ।
प्रागल्भ्यं सुसहायः कृतज्ञता मन्त्ररक्षणं त्यागः ॥

१०२१ जनरागः प्रतिपत्तिर्मित्रार्जनमानृशंस्यमस्तम्भः ।
आश्रितजनवात्सल्यं दशसप्त कलाः प्रभावस्य ॥

१०२२ मौनमलौल्यमयाचञा मानस्य तु जीवितं कलात्रितयम् ।
एताः कलाविदग्धैः सुरताः कार्याश्चतु[ः]श(ष)ष्टिः ॥

१०२३ शक्तिविरोधे गमनं तत्प्रणतिर्वा बलोदये वैरम् ।
आर्तस्य धर्मचर्या दुःखे धै[र्यं] सुखेष्वनुत्सेकः ॥

१०२४ विभवेषु संविभागः सत्सु रतिर्मन्त्रसंशये प्रश्नः ।
नीचेषु पराङ्मुखता भेषजमेतत्कलादशकम् ॥

—केषामप्येते

१०२५ नीचाऽपि सा प्रकाश्यैव जीव्यते कलया यया ।
वर्तमानः सतां रीत्या भण्डः कैर्नोपहस्यते ॥

*इति कलाख्यानम्*

*सन्तोषप्रशंसा*

१०२६ वातोद्धूतपल(ला)[श?ल?] चञ्चल सखे चेतश्चिरेण त्वया
भ्रान्तं कुत्र न कुत्र लम्पट मुखप्रत्याशयाऽहर्निशम् ।
वाञ्छा वर्द्धत एव केवलमहो तत्सर्वथा शिक्षये
दाक्षिण्येन नमापि (?) निर्वृ तिकरं सन्तोषसौख्यं भज ॥

—कस्यापि

१०२७ जातः कल्पतरुः पुरः सुरगवी तेषां प्रविष्टा गृहं
चिन्तारत्नमुपस्थितं करतले प्राप्तो निधिः सन्निध(धिम्?) ।
विश्वं वश्यमवश्यमेव सुलभाः स्वर्गापवर्गश्रियो
ये सन्तोषमशेषदोषदहनध्वंसाम्बुदं बिभ्रति ॥

—मञ्जुघोश(ष)स्य

१०२८ सर्पाः पिबन्ति पवनं न च दुर्ब[ला]स्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवरा[ः] क्षपयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥

१०२९ वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषो निर्विशेषो विशेषः ।
स हि भवति दरिद्रो यस्य तृष्णा विशाला
मनसि हि परितुष्टे कोऽर्थवान् को दरिद्रः ॥

१०३० प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तल्लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयामि
यदस्मदीयं न हि तत्परेषाम् ॥

१०३१ तन्मूलं गुरुतायास्तत्सौख्यं तद्यशस्तदूर्जित्यम् ।
तत्सौभाग्यं पुंसां यदेतदप्रार्थनं नाम ॥

—केषामप्येते

१०३२ अकृत्वा परसन्तापमगत्वा खलनम्रताम् ।
अनुत्सृज्य सतां मार्गं यत्स्वल्पमपि तद् बहु ॥

१०३३ आगमिष्यन्ति ते भावा ये भावा मयि भाविताः ।
अहं तैरनुगन्तव्यो न तेषामन्यतो गतिः ॥

१०३४ यो मे गर्भस्थितस्यापि नित्यं कल्पितवान् पयः ।
शेषवृत्तिविधानेऽपि स किं सुप्तोऽथवा मृतः ॥

१०३५ आत्माधीनशरीराणां स्वपतां निद्रया निशि ।
कदन्नमपि मर्त्याणाममृतत्वाय कल्पते ॥

१०३६ अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते ॥

१०३७ सन्तु स्वाराज्यभूराज्यभुवः प्राज्यविभूतयः ।
एतावतैव तुष्टोऽस्मि यन्नायत्तोऽस्मि कस्यचित् ॥

—भगवतो व्यासस्य

*सन्तुष्टप्रशंसा*

१०३८ भूः पर्यङ्को निजभुजलता गण्डकं खं वितानो
दीपश्चन्द्रः सुमतिरबला धूलिभिश्चाङ्गरागः ।
दिग्बालाभिः पवनचमरैर्वीज्यमानः समन्ताद्
भिक्षुः शेते नृप इव सदा प्राप्तसर्वाभिलाषः ॥

—भर्तृहरेः

१०३९ श्लाघ्यः कुलीनः कुलजात्कलावान्
विद्वान् कलार्हाद् विदुषः सुशीलः ।
धनी सुशीलाद् धनिनोऽपि दाता
दातुर्जिता कीर्तिरयाचकेन ॥

—क्षेमेन्द्रस्य

१०४० अर्थी करोति दैन्यं लब्धार्थो गर्वमपरितोषञ्च ।
नष्टधनश्च स शोकं सुखमास्ते निःस्पृहः पुरुषः ॥

*तृष्णापरपर्यायस्य लोभस्य निन्दा*

१०४१ स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः
प्रवाचः कार्पण्याद् यदवितथवाचोऽपि पुरुषाः ।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा
निरीहाणामीशस्तृणमिव तिरस्कारविषयः ॥

—विशाखदेवस्य

१०४२ प्रातर्याचनतत्परेण मनसा देहीति वाक् प्रेरिता
भुक्तं मानविवर्जितं परगृहे निःशङ्कमाः काकवत् ।
भ्रान्त्वा देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं
तृष्णे जृम्भसि पापकर्मनिरतो(ते) नाद्यापि विश्राम्यसि ॥

१०४३ खलालापाः सोढाः कथमपि तदाराधनपरै[र्]
निगृह्यां तत्त्वार्थं(?) हसितमपि शून्येन मनसा ।
कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् ॥

१०४४ उत्खातं निधिशङ्कया क्षितितलं धा(ध्मा?) ता गिरेर्धातवो
निस्तीर्णः सरितां पति(र्)नृपतयो यत्नेन सन्तोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥

—भर्तृहरेः

१०४५ आशावलम्बोपचिता न कस्य
तृष्णा लताऽनर्थफलं प्रसूते ।
दिने दिने लब्धरुचिर्विवस्वान्
मीनञ्च मेषञ्च वृषञ्च भुंक्ते ॥

—रत्नाकरस्य

१०४६ इच्छति शती सहस्रं सहस्री लक्षमीहते कर्तुम् ।
लक्षाधिपति(ती) राज्यं राज्येऽपि सकलचक्रवर्तित्वम् ॥

१०४७ चक्रधरोऽपि सुरत्वं सुरत्वलाभे सकलसुरपतिर्भवितुम् ।
सुरपतिरूर्ध्वगतित्वं तथापि न निवर्तते तृष्णा ॥

—गरुडादेतौ

१०४८ द्वाल(र)पालकराघातकिणीकृतगले(लो)ऽपि सन्।
तथापि कुरुते सेवामहो तृष्णा गरीयसी ॥

१०४९ पिशाचीव विशत्यन्तः छायेव न चलत्यलम्।
वेश्येव भ्रमयत्याशा[ः]शोकं(कः) कन्येव कर्षति ॥

—क्षेमेन्द्रस्य

१०५० तृष्णाखनिरगाधेयं दुःपूरा केन पूर्यते।
या महद्भिरपि क्षिप्तैः पूरणैरेव(?)खन्यते ॥

१०५१ तृष्णे त्वमपि तृष्णान्धा चतुःस्थानेषु रज्यसे।
व्याधितेष्वनपत्येषु तपस्विषु च राजःसु च ॥

१०५२ च्युता दन्ताः सिताः केशा वाग्विरोधः पदे पदे।
पातसज्जमिमं देहं तृष्णा साध्वी न मुञ्चति ॥

१०५३ धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु।
आ(अ)तृप्ताः प्राणिनः सर्वे याता यास्यन्ति यान्ति च।

—भगवतो व्यासस्यैते

*सतृष्णनिन्दा*

१०५४ फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम्।
मृदु[स्प]र्शा शय्या सुललितलतापल(ल्ल)वमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥

—कृष्णमिश्रस्य

१०५५ आत्मज्ञानविवेकनिर्मलधियः ... कुर्वन्त्यहो दुःकरं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः।

न प्राप्तानि पुरा न सम्प्रति न च प्राप्तौ दृढः प्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥

१०५६　लुब्धः सदा विचिन्त्यो लुब्धेभ्यः सर्वतो भयं दृष्टम् ।
कार्याकार्यविचारो लोभविमूढस्य नास्त्येव ॥

२०५७　नात्यर्थमर्थार्थनया लुब्धमुद्वेजयेज्जनम् ।
अब्धि[र्] दत्ताश्वरत्नश्रीर्मथ्यमानोऽसृजद् विषम् ॥

१०५८　सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥

—केषामप्येते

१०५९　सन्तुष्टमनसां पुंसां मेरुः पांशुकणायते ।
असन्तुष्टहृदां नृणां रेणुः स्वर्णाचलायते ॥

—हरिकवेर्ममायम्

*साहसप्रशंसा*

१०६०　स्वर्गस्तस्य गृहाङ्गणत्यहिपुरं भूमीगृहत्यंम्बु(बु)दा-
मुल्लोचन्ति जगद्विवासितिशिरो(?)गेहन्ति धात्रीभृतः ।
द्वीपानि प्रणघन्ति(?)वारिनिधयः क्रीडातडागन्त्यहो
यस्य स्यादसमानपौरुषनिधेर्लोकोत्तरं साहसम् ॥

१०६१　पृथ्वी तावदियं समुद्रपरिखा तावन्निरालम्बनं
व्योमैतन्ननु तावदेव विषमः पातालयात्रागमः ।
दत्वा मूर्ध्नि पदं............
..........................................

*अथ नीतिः*

१०६२ निर्विवेकतया बाल्यं कामोन्मादेन यौवनम् ।
वृद्धत्वं विकलत्वेन सदा सोपद्रवं[1](?) नृणाम् ॥

१०६३ कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥

१०६४ सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति जनास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥

१०६५ तिलकेन [केन]चिदलं जपमालिकया कयाऽपि चालमलम् ।
अलमहि(मिह) मानसममलं जगदपि सकलं वशीकर्तुम् ॥

१०६६ भुक्त्वोपविशतस्तुन्दबलमुत्तानशायिनः ।
आयुर्वामकटिस्थस्य मृत्युर्धावति धातव(वतः) ॥

१०६७ षट् गुरौ स्वामिनः पञ्च द्वौ भ्रातृद्विगुणा रिपौ ।
श्रीकारास्तु त्रयो मित्र एकैकं पुत्रभार्ययोः ॥

१०६८ नहीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानञ्च मधुरा च वाक् ॥

१०६९ किंक्षणस्य कुतो विद्या किङ्कणस्य कुतो धनम् ।
क्षणशः कणशश्चैव विद्यामर्थञ्च साधयेत् ॥

१०७० आलस्यान्मूर्खसंसर्गाद् भयाद् रोगप्रपीडितात् ।
अत्यन्तादभिमानाच्च षड्भिर्विद्या प्रणश्यति ॥

---

१. 'मे वप्रति वं' इति लिखति ।

१०७१ सविद्योप्यौ(?) यदि स्यातां स्या[त्?] प्रिया किं प्रयोजनम् ।
तावेव यदि स्यातां प्रह्विया न प्रयोजनम् ॥

१०७२ अजरामरवत्प्राज्ञा(ज्ञो) विद्यामर्थञ्च साधयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥

१०७३ अहेरिव गणाद् भीतो मिष्टान्नान्नरकादिव ।
राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥

१०७४ गुरुषु(शु)श्रूषया विद्या केवलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थेन न लभ्यते ॥

१०७५ धर्णं धणाण मूलं जाया मूलं सुहाण सयलाणं ।
विणयो गुणाण मूलं दप्पो मूलं विणासस्स ॥

१०७६ अनुचितकर्मारम्भः स्वज[न]विरोधो बलीयसा स्पर्धा ।
प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि ॥

१०७७ शनैः पन्था[ः] शनैः कन्था शनैः पर्वतमस्तकम् ।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥

१०७८ आत्मबुद्धिः शुभकरी गुरुबुद्धिर्विशेषतः ।
परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयङ्करी ॥

१०७९ अन्त[ः]कटुरपि लघुरपि सद्वृत्तं यः पुमान्न संत्यजति ।
स भवति सद्यो वन्द्यः सर्षप इव सर्वलोकस्य ॥

१०८० एतदेव हि पण्डित्यमेषा चैव कुलीनता ।
एष एव परो धर्म आयादूनतरो व्ययः ॥

१०८१ इयमेव परा नीतिरियमेव विदग्धता ।
इदमेव परं ज्ञानमायादूनतरो व्ययः ॥

१०८२ परोऽपि हितवान् बन्धुर्बन्धुरप्यहि(प्यहि)तः परः ।
अहितो देवजो व्याधिर्हितमारण्यमोषधम् ॥

१०८३ यच्छक्यं ग्रसितुं ग्रासं ग्रस्तं परिणमेच्च यत् ।
हितञ्च परिणामे स्यात्तदद्यं भूतिमिच्छता ॥

१०८४ मा तात साहसं काषी(र्षी)र्विभवैर्गव(र्व)मागतः ।
स्वगात्राण्यपि भाराय भवन्ति हि विपर्यये ॥

१०८५ मा त्वं तात बले स्थित्वा बाधिष्ठा दुर्बलं जनम् ।
न हि दुर्बलदग्धानां कुले किञ्चित् प्ररोहति ॥

१०८६ यानि मिथ्याभिभूतानां पतन्त्यश्रूणि रोदताम् ।
तानि सम्पातुकान् विद्धि सपुत्रपशुबान्धवान् ॥

१०८७ ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिकुलेषु च ।
वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥

१०८८ प्राणी(णि)तश्चाप्राणी(णि)तश्च यथाऽग्निर्दैवतं महत् ।
एवं विद्वानविद्वांश्च ब्राह्मणो दैवतं परम् ॥

१०८९ अदेवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
लोकपालान् सृजेयुश्च लोक(का)नन्यांश्च कोपिताः ॥

१०९० युगे युगे च ये धर्मास्तेषु धर्मेषु ये द्विजाः ।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ॥

१०९१ आक्रम्य य[द्] द्विजैर्भुक्तै[ः]परिक्षीणैश्च बान्धवैः ।
गोभिश्च नृपशार्दूल ! राजसूयाद् विशिष्यते ॥

१०९२ गतश्रीर्गणकान् द्वेष्टी(ष्टि) गतायुश्च चिकित्सकान् ।
गतश्रीश्च गतायुश्च ब्राह्मणान् द्वेष्टि भारत ॥

१०९३ बुद्धौ कलुश(ष)भूतायां विनाशे समुपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥

१०९४ न कालः खड्गमुद्यम्य शिरः कृन्तति कस्यचित् ।
कालस्य बलमेतावद् विपरीतार्थदर्शनम् ॥

१०९५ जानन्नपि नरो दैवात् प्रकरोति विगर्हितम् ।
न कर्म कस्यचिल्लोके गर्हितं रोचते कृतम् ॥

१०९६ मा तात सम्पदामग्रमारूढोस्मि(स्मी)[ति] विश्वसीः ।
दूरारूढपरिभ्रंशविनिपातो हि दारुणः ॥

१०९७ किं तवायं प्रशंसन्ति यं प्रशंसन्ति चारणाः ।
यं प्रशंसन्ति बन्धुक्यः स पार्थ पुरुषाधमः ॥

१०९८ राजानो यं प्रशंसन्ति यं प्रशंसन्ति च द्विजाः ।
साधवो यं प्रशंसन्ति स पार्थ पुरुषोत्तमः ॥

१०९९ प्रज्ञागुप्तशरीरस्य किं करिष्यन्ति संहताः ।
गृहीतच्छत्रहस्तस्य वारिधारा इवारयः ॥

११०० बहूनामप्यसाराणां समवायो हि दारुणः ।
तृणैर्विधि(धी)यते रज्जुर्बध्यन्ते दन्तिनस्तवा(या) ॥

११०१ गन्तव्यं राजकुले द्रष्टव्या राजपूजिता लोकाः ।
यद्यपि न भवन्त्यर्थास्तथाप्यनर्था विलीयन्ते ॥

११०२ अत्यासन्ना विनाशाय दूरतश्च फलप्रदाः ।
सेव्या[हि]मध्यभागेन राजा वह्निगुरुस्त्रियः ॥

११०३ आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहि(ही)नमकुलीनमसङ्गतं वा ।
प्रायेण भूमिपतयः प्रमदा लताश्च
यः पार्श्वतो भवति तं परिवेष्टयन्ति ॥

११०४ राज्ञो मातरि देव्याञ्च कुमारे मुख्यमन्त्रिणि ।
पुरोहिते प्रति(ती)हारे वर्तितव्यं नृपे यथा ॥

११०५ गुणवदगुणवद् वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्कृतः(?) पण्डितेव ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृयद(दय)दाहि(ही) शल्यतुल्यो विपाकः ॥

११०६ आयाच्चतुर्थभागेन व्ययकर्म प्रवर्तयेत् ।
प्रभूततैलो दीपो हि चिरं भद्राणि पश्यति ॥

११०७ अर्थानामर्जनं कार्यं वर्द्धनं रक्षणं तथा ।
भक्ष्यमाणो हि सततं सुमेरुः परिहीयते ॥

११०८ सम्भोजनं सङ्कथनं संप्रा(प्र)श्नोऽथ समागमः ।
ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥

११०९ सङ्गतिः श्रेयसी राजन्यगुणेष्वपि बन्धुषु ।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥

१११० मृदोः परिभवो नित्यं वैरं तीक्ष्णस्य नित्यशः ।
उत्सृज्यैतद् द्वयं तस्मा[न्] मध्यमां वृत्तिमाश्रयेत् ॥

११११ अबुद्धिमाश्रितानां हि क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषे क्वचित् ॥

१११२ तेजस्विनि क्षमासारे नातिकार्कश्यमाचरेत् ।
अतिनिर्मथनादग्निश्चन्दनादपि जायते ॥

१११३ किमप्यसाध्यं महतां सिद्धिमेति लघीयसाम् ।
प्रदीपो भूमिगेहान्तर्ध्वान्तं हन्ति न भानुमान् ॥

१११४ अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरति द्रुमः ॥

१११५ हन्तुमेषोऽपसरति मृगेन्द्रः सङ्कुचै(च)त्यपि ।
बुद्धिमन्तः सहन्ते तन्निधाय हृदि किञ्चन ॥

१११६ लघुमर्थेन गृह्णीयास्तब्ध(?)मञ्जलिकर्मणा ।
मूर्खं छन्दानुवृत्त्या च याथाति(त)थ्येन पण्डितम् ॥

१११७ कोऽहं कौ देशकालौ समविषमगुणाः केऽरयः के सहायाः
का शक्तिः कोऽभ्युपायः फलमपि च कियत्कीदृशी दैवसम्पत् ।
सम्पत्तौ को निबन्धः प्रतिहतवचनस्योत्तरं किन्नु मे स्या-
दित्येवं कार्यसिद्धावपवहितमनसो नैव हास्या भवन्ति ॥

१११८ यशस्करे संग्रहिमित्रकर्मणे
प्रियासु नारीषु धनेषु बन्धुषु ।
कृतौ विवाहे व्यसने रिपुक्षये
धनव्ययस्त्वे[षु]न गण्यते बुधैः ॥

१११९ व्रजन्ति ते मूढधियः पराभवं
[भवं]ति मा[यावि]श्रु(षु) ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधा-
न्न(न)संवृताङ्गान्निशिता इवेश(ष)वः ॥

११२० स्तब्ध[स्य] नश्यति यशो विश(ष)मस्य मैत्री
नष्टक्री(क्रि)यस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यस[नि]नः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥

११२१ शाठ्येन मित्रं कपटेन धर्मं परोपतापेन समृद्धिभावम् ।
सुखेन विद्यां पु(प)रुषेण नारीं वाञ्छति(न्ति)ये व्यक्तमपण्डितास्ते ॥

११२२ यो यमर्थं प्रार्थयते यदर्थं घटते च यः ।
अवश्यं तदवाप्नोति न चेच्छ्रान्तो निवर्तते ॥

११२३ चिबुके यस्य रोमाणि न च रोमाणि गण्डयोः ।
तेन सख्यं न कर्तव्यं यदि निर्मानुषं जगत् ॥

११२४ नदीनां नखिनाञ्चैव शृङ्गी(ङ्गि)णां शस्त्रपाणिनाम् ।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥

११२५ न गणस्याग्रतो गच्छेत् सिद्धे कार्ये समं फलम् ।
यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते ॥

११२६ धातुर्वा(वा?)देषु वित्ताशा मोक्षाशा कौलिके मते ।
जामातरि च पुत्राशा त्रयमेतनि(न्नि)रर्थकम् ॥

११२७ शक्तिरहितोऽपि कुप्यति सेवासक्तोऽपि मानमुद्वहति ।
अधनोऽपि हि काम[य]ते जानामि विधिर्विडि(ड)म्बयति ॥

११२८ सुजीर्णमन्नं सुविचक्षण[ः] सुतः
सुशासिता स्त्री नृपतिः सुसेवितः ।
सुचिन्तयोक्तं सुविचार्य यत्कृतं
सुदीर्घकालेऽपि न याति विक्रियाम् ॥

१९२९ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनं चापमानञ्च मि(म)तिमान्न प्रकाशयेत् ॥

११३० प्रस्तावसदृशं वाक्यं सद्भाव[स]दृशंप्रियम् ।
आत्मको(नो)पि समं कोपं यो जानाति स पण्डितः ॥

११३१ सेवनीयो महान् वृक्षः फलच्छा[या]समन्वितः ।
यदि दैवात्फलं नाप्यं छाया केन निवार्यते ॥

११३२ दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालनाद्
विप्रोऽनध्ययनात्कुलं कुत[न]याच्छीलं खलोपासनात् ।
स्त्री मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयात्
मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद् धनम् ॥

११३३ राजा घृणी ब्राह्मणः सर्वभक्षी
स्त्री चावशा दुःप्रकृतिः सहायः ।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति ॥

११३४ दरिद्रता धीरतया विराजते
कुरूपता शीलतया विराजते ।
कुभोजनं चोष्णतया विराजते
कुवस्त्रता शुभ्रतया विराजते ॥

११३५ कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥

११३६ जिता धनवता दारा वस्त्रशास्त्रजिता सभा ।
जितं कृष्या च दारिद्र्यं गोभिरभ्यागता जिताः ॥

११३७ क्षमाधनुःसमेतस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥

११३८ पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् ।
मौनिनः कलहो नास्ति नास्ति वै जाग्रतो भयम् ॥

११३९ आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम् ।
पृथक् शय्या च नारीणामशस्त्रवध उच्यते ॥

११४० विश्वासप्रतिपन्नानां वञ्चने [का] विदग्धता ।
अङ्कमारुह्य सुप्तस्य हन्तुः किं नाम पौरुषम् ॥

११४१ वैद्यं पानरतं नटं कुपठितं स्वाध्यायहीनं द्विजं
योधं कापुरुषं हयं गतरयं मूर्खं परिव्राजकम् ।
राज्यं बालनृपञ्च मन्त्रिरहितं मित्रं छलान्वेषि यत्
भार्यां यौवनगर्वितां पररतां नेच्छन्ति ते पण्डिताः ॥

११४२ गतेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः ।
यद्यपि स्यान्न फलदा सुलभा साऽन्यजन्मनि ॥

११४३ वाङ्माधुर्या[न्ना]न्यदस्ति प्रियत्वं
वाक्पारुष्याच्चोपकारोऽपि नेष्टः ।
किं तद् द्रव्यं कोकिलेनोपनीतं
किं(को) वा लोके गर्दभस्यापराधः ॥

११४४ प्रहरिष्यन् प्रियं ब्रूयात्प्रहृत्यापि प्री(प्रि)योत्तरम् ।
अपि चास्य शिरश्छित्वा रुद्याच्छोचेत्तथापि च ॥

११४५ सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ।
विद्यते हि न स कश्चिदुपायः सर्वलोकपरितोषकरो यः ॥

११४६ नालसाः प्राप्नुवन्त्यर्थान्न शठा न च मायिनः ।
न च लोकरवाद् भीता न च शश्वत्प्रतीक्षिणः ॥

११४७ अनागतविधातारमप्रमत्तमकोपनम् ।
स्थिरारम्भमदीनञ्च नरं श्रीरुपतिष्ठति ॥

११४८ सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते ।
प्रारम्भे कृतबुद्धीनां सिद्धि[र]व्यभिचारिणी ॥

११४९ काकतालीययोगेन यदनात्मवति क्षणम् ।
करोति प्रणयं लक्ष्मीस्तदस्याः स्त्रीव चापलम् ॥

११५० केचिदज्ञानतो नष्टाः केचिन्नष्टाः प्रमादतः ।
केचिज्ज्ञानावले[पे]न केचिन्नष्टैस्तु नाशिताः ॥

११५१ मित्रस्वजनबन्धूनां बुद्धेर्धैर्यस्य चात्मनः ।
आपन्निकषपाषाणे जनो ज(जा)नाति सारताम् ॥

११५२ दुष्टैरपि निजैरेव प्रावृतं सर्वमुत्तमम् ।
वृतं जीर्णाम्बरेणापि हट्टकर्पटमर्घ(र्ह)ति ॥

११५३ चिन्तनीया हि विपदामादावेव प्रतिक्रिया ।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥

११५४ अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम् ।
पश्चाद् भवति सन्तापो ब्राह्मणी नकुलं यथा ॥

११५५ दिवा निरीक्ष्य वक्तव्यं रात्रौ नैव च नैव च ।
सञ्चरन्तीह भूतानि वटे वररुचिर्यथा ॥

११५६ स्त्रि(स्त्री) विनश्यति गर्वेण ब्राह्मणा राजसेवया ।
गावो दूरप्रचारेण हिरण्यं लोभलिप्सया ॥

११५७ स्त्रियः कामेन नश्यन्ति ब्राह्मणा नीचसेवया ।
राजानो ब्रह्मदण्डेन यतयो भोगसङ्ग्रहात् ॥

११५८ अतिदानाद् बलिर्बद्धो नष्टो मानात्सुयोधनः ।
विनष्टो रावणो लौल्यादति सर्वत्र वर्जयेत् ॥

११५९ अतिपरिचयादवज्ञा संततगमनादनादरो भवति ।
मलये भिल्लपुरन्ध्री चन्दनतरुमिन्धनं कुरुते ॥

११६० धनमस्तीति वाणिज्यं किञ्चिदस्तीति कर्षणम् ।
सेवा न किञ्चिदस्तीति नाहमस्मीति साहसम् ॥

११६१ स्पृशन्नपि गजो हंसि(ति) जिघ्रन्नपि भुजङ्गमः ।
हसन्नपि नृपो ह(हं)ति मानयन्नपि दुर्जनः ॥

११६२ सपक्षो लभते काको वृक्षस्य विविधं फलम् ।
पक्षहीनो मृगेन्द्रोऽपि भूमिसंस्थो निरीक्षते ॥

११६३ अलब्ध्वाऽपि धनं राज्ञः संश्रयाद् यान्ति सम्पदः ।
महाह्रदसमीपस्थं पश्य नीलं वनस्पतिम् ॥

११६४ कठिनं वा मधुरं वा प्रस्तुतवचनं मनोहारि ।
वामो गद्‌भरावश्चित्तप्रीत्यै प्रयाणेषु ॥

११६५ वृथा वृष्टिः समुद्रस्य वृथा तृप्तस्य भोजनम् ।
वृथा दानं समर्थस्य वृथा शूरस्य भूषणम् ॥

११६६ सप्तैतानि न पूर्यन्ते पूर्यमाणान्यपि क्वचित् ।
ब्राह्मणोऽग्निर्यमो राजा पयोधिरुदरं गृहम् ॥

११६७ वस्त्रं गाञ्च बहुक्षीरां जलपा[त्र]मुपानहौ ।
औषधं बीजमाहारं संक्रीणीत यथाऽनुयात् ॥

११६८ अवृत्तिकं त्यजेद् देशं वृत्तिं सोपद्रवां त्यजेत् ।
त्यजेन्मा(न्मा)याविनं मित्रं धनं प्राणहरं त्यजेत् ॥

११६९ सौहृदेन परित्यक्तुं(क्तं)निःस्पृहं खलवत् त्यजेत् ।
सोदरं सादरमपि किमि(मु)तान्यं पृथग्जनम् ॥

११७० यन्निमित्तं भवेच्छोकस्त्रासो वा दुःखमेव वा ।
आयासो वा यतोमूलस्तदेकाङ्गमि[व] त्यजेत् ॥

११७१ त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥

११७२ चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः ।
न समीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥

११७३ पञ्च यत्र न विद्यन्ते न यत्र दिवसं वसेत् ।
प्रयोगी श्रोत्री(त्रि)यो राजा नदी वैद्यश्च पञ्चमः ॥

११७४ अनायके न वस्तव्यं न वसेद् बहुनायके ।
स्त्रीनायके न वस्तव्यं न वसेद् बालनायके ॥

११७५ सर्वे यत्र विनेतारः सर्वे पण्डितवादिनः ।
सर्वे महत्त्वमिच्छन्ति तद्वृन्दमवसीदति ॥

११७६ घटं भिन्द्यात्पटं[भि]न्द्यात् कुर्यात् किञ्चिदथाद्भुतम् ।
येन केनाभ्युपायेन नाविज्ञातः पुरे वसेत् ॥

११७७ वाग्वादमर्थसम्बन्धं परोक्षे दारदर्शनम् ।
यदि(दी)च्छेद् विपुलां प्रीतिं त्रीणि तत्र न कारयेत् ॥

११७८ विवादो धनसम्बन्धो याचनं स्त्रीषु सङ्गतिः ।
आदानमग्रस्थायित्वं मैत्रीभङ्गस्य हेतवः ॥

११७९ दुःखेन श्लिष्यते भिन्नं श्लिष्यं(ष्टं) दुःखेन भिद्यते ।
भिन्नश्लिष्टा तु या प्रीतिः सा दुःखैकप्रदायिनी ॥

११८० ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवादश्च न तु पुष्टविपुष्टयोः ॥

११८१ उत्तमाश्चात्मना ख्याताः पित्रा ख्याताश्च मध्यमाः ।
अधमा मातुलैः ख्याताः श्वशुरैश्चाधमाधमाः ॥

११८२ ज्येष्ठो भ्राता पितृसमो मृते पितरि न(नि)श्चितम् ।
स ह्येषां वृत्तिदाता स्यात्स ह्येषां प्रतिपालयेत् ॥

११८३ कनिष्ठास्तं नमस्येरन् सर्वे छन्दानुवर्तिनः ।
तमेव चोपजीवेरन् यथैव पितरं यथा ॥

११८४ विभागेऽपि समान(ना)स्ते पितुर्द्रव्यस्य केवलम् ।
लघोः पूर्वतरो यस्तु गुरुः स हि निगद्यते ॥

११८५ ऋणशेषश्चाग्निशेषः शत्रुशेषस्तथैव च ।
पुनः पुनः प्रवर्तन्ते तस्माच्छेषं न कारयेत् ॥

११८६ चतुरः सृजता पूर्वमुपायांस्तेन वेधसा ।
न सृष्टः पञ्चमः कोऽपि गृह्यन्ते येन योषितः ॥

११८७ स्त्रियस्तु यः कामयते सन्निकर्षञ्च गच्छति ।
ईषच्च कुरुते सेवां तं तमिच्छन्ति योषितः ॥

११८८ तुल्यन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमम् ।
हृदये चिन्तयन्त्यन्यं न स्त्रीणामेकतो रतिः ॥

११८९ नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पू(पुं)सां वामलोचनाः ॥

११९० बठरश्च तपस्वी स्याच्छूरश्चाप्यकृतव्रणः ।
मद्यपा स्त्री सती राजन्निति न श्रद्दधाम्यहम् ॥

११९१ रहो नास्ति क्षणो(णं) नास्ति नास्ति प्रार्थयिता नरः ।
तेन नारद नारीणां तरी(रति)त्वमुपजायते ॥

११९२ न लज्जा न कुलं नैव रक्षा नैव च भीरुता ।
प्रार्थनाऽभाव एवैकः सतीत्वे कारणं स्त्रियः ॥

११९३ सुरूपं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ।
योनिः क्लिद्यति नारीणामामपात्रमिमा(वा)म्भसा ॥

११९४ अनृतं साहसं माया मूर्खत्वमतिदुष्टता ।
अशौचं निर्दयत्वञ्च स्त्रीणां दोषाः स्वभावजाः ॥

११९५ न स्त्रीणामप्रियः कश्चित् प्रियो वाऽपि न विद्यते ।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥

११९६ नासां कश्चिदगम्योऽस्ति नासां मनसि निश्चितः ।
सुरूपो वा कुरूपो वा पुमानित्येव युज्यते ॥

११९७ पङ्गुश्चान्धश्च कुष्ठी च यश्चान्यः कुत्सितो नरः ।
स्त्रीणामगम्यो लोकेऽस्मि[न्]नास्ति कश्चिन्महामुने ॥

११९८ यदि पुंसां गतिर्ब्रह्म कथञ्चिन्नोपपद्यते ।
अथान्योन्यं प्रवर्तन्ते न च तिष्ठन्ति भर्तृषु ॥

११९९ घृतकुम्भसमा नारी तप्तां[गार]समः पुमान् ।
तस्माद् घृतं च वह्निञ्च नैकत्र स्थापयेत्सुधीः ॥

१२०० पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रः स्थविरभावे च न स्त्री स्वातन्त्र्यमर्हति ॥

१२०१ शशिनीव हिमार्तानां घर्मार्तानां रवाविव ।
मनो न रमते स्त्रीणां जराग्रस्तेन्द्रिये प्रिये ॥

१२०२ यदीव भर्ता जानीवा(या)दन्यमन्त्रपरां स्त्रियम् ।
उद्विजेत तदैवास्याः सर्पाद् वेश्म(श्म)गतादिव ॥

१२०३ व्रजत्यधोऽधो यात्युच्चैर्नरः स्वैरेव चेष्टितैः ।
खनितेव हि कूपस्य प्र(प्रा)सादस्येव कारकः ॥

१२०४ न स्वापेन जयेन्निद्रां न कायेन स्त्रियं जयेत् ।
नेन्धनेन जयेद् वह्निं न पानेन सुरां जयेत् ॥

१२०५ सुखार्थी संत्यजेद् विद्यां विद्यार्थी संत्यजेत्सुखम् ।
सुखिनस्तु कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥

१२०६ कल्पानि काशिना श्रेष्ठा वधू श्रेष्ठा चयेषिता ।
अन्नसंग्रहणं श्रेष्ठं श्रेष्ठं निःकाशितं रजः (?) ॥

१२०७ हतं ज्ञानं क्रियाहीनं हताश्चाज्ञानिनो जनाः ।
हतं चानायकं सैन्यमभर्तारो हताः स्त्रियः ॥

१२०८ अभ्रच्छाया खलप्रीति[र्] नवसस्यानि योषितः ।
किञ्चित्कालोपभा(भो)ग्यानि यौवनानि धनानि च ॥

१२०९ अव्यापारे[षु] व्यापारं यो नरः कर्तुमिच्छति ।
स एव निधनं याति कीलोत्पाटीव वानरः ॥

१२१० प्रत्यक्षे गुरुराजानौ परोक्षे मित्रबान्धवः ।
प्रत्यक्षे वा परोक्षे वा न स्तुतिः पुत्रदारयोः ॥

१२११ ताडयेत्पञ्चवर्षाणि दशवर्षाणि लालयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥

१२१२ भूमिपा(प)तावर्थपा(प)तौ बाले वृद्धे तपोऽधिके विदुषि ।
योषिति मूर्खे तु गुरौ विदुषा नैवोत्तरं देयम् ॥

१२१३ व्यसने मित्रपरि[री]क्षा दानपरीक्षा च दुर्भिक्षे ।
विनये वंशपरीक्षा शूरपरीक्षा रणाङ्गणे भवति ॥

१२१४ युक्तिं युक्तां प्रगृह्णीयाद् बालादपि विचक्षणः ।
रवेरविषये यत्तु किं न दीपः प्रकाशयेत् ॥

१२१५ न भोजनविलम्बी स्यान्न च नारीनिबन्धनः ।
सुदूरमपि विद्यार्थी व्रजेद् गुरूगृ(हं?)न च(?) ॥

१२१६ विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥

१२१७ बहुभिर्न विरोद्धव्यं दुर्जनैः सुजनैरपि ।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥

१२१८ गर्दभः पटहो दासी ग्रामीणः पशवः स्त्रियः ।
दण्डेनाक्रम्य युञ्जीयान(न्न) ते सम्मानभाजनम् ॥

१२१९ असन्तुष्टा द्विजा नष्टाः सन्तुष्टा एव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गना ॥

१२२० शास्त्रं सुचिन्तितमपि प्रतिचिन्तनीय-
माराधितोऽपि नृपतिः परं(रि)शङ्कनीयः ।
अङ्के स्थिता युवतयः परि[र]क्षणीया[ः]
श(शा)स्त्रे नृपे च युवती च कुतो वशत्वं (शित्वम् ?) ॥

१२२१ आपत्सु मित्रं जानीयाद् युद्धे शूरं धने शुचिम् ।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥

१२२२ परोपदेशे कुशला दृश्यन्ते बहवो जनाः ।
स्वभाववयत्तु(मति)कुर्वन्ते सहस्रे ऽथापि दुर्लभाः ॥

१२२३ जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥

१२२४ यस्य च(चा) प्रियमन्विच्छेत्तस्य कुर्यात् सद(दा) प्रियम् ।
व्याधो मृगवधुं(धं) कर्तुं सम्यगो(ग्गा)यति सुस्वरम् ॥

१२२५ दाक्षिण्यं स्वजने दयां परिजने शाठ्यं जने दुर्जने
प्रीतिं साधुजने स्मयां(यं) खलजने विद्वज्जनेष्वार्जवम् ।
शा(शौ)र्यं शत्रुजने क्षमा गुरुजने [नारीजने?] धूर्तता
ये जानन्ति जनाः कलासु कुशलास्तेषां त्रिलोके स्थितिः ॥

१२२६ रागद्वेषे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥

१२२७ बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च ।
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥

१२२८ तुष्टोऽपि राजा यद्याप्न तु तुष्टो वणिग्जनः ।
अक्षो भूमिपतिः सेव्यस्ता(स्त्या)ज्यो दूरतरेण सः(?) ॥

१२२९ कथं नाम न सेव्यन्ते यत्नतस्ते नरेश्वराः ।
अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥

१२३० यदपथ्यवतामायुर्यदनीतिवति प्रियः ।
तदेतत्काकताला(ली)यं तदेतच्च घुणाक्षरम् ॥

१२३१ आपदर्थं धनं रक्षेद् दारान् रक्षेद् धनैरपि ।
आत्मानं सततं रक्षेद् दारैरपि धनैरपि ॥

१२३२ सद्भावेन हरेन्मित्रं सद्भावेन च बान्धवान् ।
स्त्रीभृत्यान्दान[मानाभ्यां] दाक्षिण्येनेतरं जनम् ॥

१२३३ स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः ।
इति विज्ञाय मि(म)तिमान् स्वस्थानं न परित्यजेत् ॥

१२३४ स्नानं नाम मनःप्रसादजननं दुःस्वप्नविध्वंसनं
शौचस्यायतनं मलापहरणं संवर्द्धनं तेजसः ।
रूपोद्योतकरं गदप्रशमनं कामस्य चाप्यायनं
नारीणाञ्च मनोहरं श्रमहरं स्नाने दशैते गुणाः ॥

१२३५ ताम्बूलं मुखरोगनाशनिपुणं संवर्द्धनं तेजसां
नित्यं जाठरवह्निवृद्धिजननं दुर्गन्धदोषापहम् ।
वक्त्रालङ्करणं प्रहर्श(र्ष)जननं विद्धन्नृपाग्रे रणे
कामस्यायतनं समुद्भवकरं लक्ष्म्याः सुखस्यास्पदम् ॥

१२३६ ताम्बूलं कटुतिक्तमुष्णमधुरक्षारं कशा(षा)यान्वितं
वातघ्नं कृमिनाशनं कफहरं दुर्गन्धिनिर्नाशनम् ।
वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं
ताम्बूलेतिपदत्रये दश गुणाः स्वर्गेऽपि ते दुर्लभः ॥

१२३७ दर्शनं नाधमद्वारा राज्ञः कार(र्य) विपश्चिता ।
गरिष्ठोऽपि लघुर्भूयादुपनीतो लघीयसा ॥

१२३८ स्वयं तथा न कर्तव्यं स्वगुणाख्यापनं पुनः ।
स्वगुणाख्यापनं युक्त्या परद्वारा प्रयोजयेत् ॥

१२३९ आक्षेपवचनं कस्य न वक्तव्यं कदाचन ।
अनुकूलं प्रियञ्चास्य वक्तव्यं जनसंसदि ॥

१२४० अभिभूतोऽप्यवज्ञातो यो राजद्वारि तिष्ठति ।
स तु राज्ञः श्रियं भुङ्क्ते नाभिमानी कदाचन ॥

—केषामप्येते

१२४१ ब्राह्मे मुहूर्ते पुरुषस्त्यजेन्निद्रामतन्द्रितः ।
पद्मं प्रातः प्रबुद्धं हि श्रयति श्रीर्गुणाश्रयम् ॥

१२४२ नोत्तरस्यां प्रतीच्याञ्च कुर्वीत शयने शिरः ।
शय्याविपर्याद् गर्भो दितेः शक्रेण दारितः ॥

१२४३ न कुर्यात्परदारेच्छां विश्वासं स्त्रि(स्त्री)षु वर्जयेत् ।
हतो दशास्यः सीतार्थी हतः पत्न्या विदूरथः ॥

१२४४ न मद्यव्यसनै[ः]क्रू(शू?)रः कुर्याद्वैतालविप्लवम् ।
वृष्णयो हा ययुः क्षीबास्तृणप्रहरणैः क्षयम् ॥

१२४५ दानं सव्याश्रितं दद्यान(न्न) पश्चात्तापवान् भवेत् ।
बलिनात्माऽर्पितो बन्धे दानशेषस्य शुद्धये ॥

१२४६ ब्राह्मणान्नावमन्येत ब्रह्मशापोऽतिदुःसहः ।
तक्षका(को)ग्नौ गतः कोपात् ब्राह्मणस्य परीक्षितः ॥

१२४७ दम्भारम्भोद्धुरं कर्म नाचरेदन्तनिःफलम् ।
ब्रह्मण्यदम्भलब्ध्या(ब्धा)स्त्रविद्या कर्णस्य निःफला ।

१२४८ न स्त्रीजितः प्रमुठ(ग्धः?)स्याद् गाढरागवशीकृतः ।
पुत्रशोकाद् दशरथो जीवं जायाजितोऽत्यजत् ॥

१२४९ क्षिपेद् वाक्यशरान् घोरान्न पारुष्यविषप्लुतान् ।
वाक्पारुष्य[वशाच्]चक्रे भीमः कुरुकुलक्षयम् ॥

१२५० परेषां क्लेष(श)दं कुर्यान्न पैशुन्यं प्रभुप्रियम् ।
पैशुन्येन गतौ राहोश्चन्द्रार्कौ भक्षणीयताम् ॥

१२५१ कुर्यान्नीचजनाभ्यस्तां न याच्ञां मानहारिणीम् ।
बलिप्रार्थनया प्राप लघुतां पुरुषोत्तमः ॥

१२५२ वक्रैः क्रूरतरैर्लुब्धैन(र्न) कुया(र्या)त् प्रतिसङ्गतिः(तिम् ) ।
वशिष्ठस्याहरद् धेनुं विश्वामित्रो निमन्त्रितः ॥

१२५३ तीव्रे तपसि लीनानामिन्द्रियाणां न विश्वसेत् ।
विश्वामित्रोऽपि सोत्कण्ठः कण्ठे जग्राह मेनकाम् ॥

१२५४ भर्तृरक्तं सदासक्तं निर्दोषं न परित्यजेत् ।
रामस्त्यक्त्वा सतीं सि(सी)तां शोकपर्याकुलोऽभवत् ॥

१२५५ न क्रोधयातुधानस्य धीमान् गच्छेद् विधेयताम् ।
निपीतभ्रातृरुधिरः प्राप निन्दां वृकोदरः ॥

१२५६ वर्जयेदिन्द्रियजयी निर्जने जननीमपि ।
पुत्रीकृतोऽपि प्रद्युम्नः कामितः शम्बरस्त्रिया ॥

१२५७ प्रभुप्रसादे विश्वासं न कुर्यात् [स्वप्न]सन्निभे ।
नन्देन मन्त्री निक्षिप्तः शकटारोऽपि बन्धने ॥

१२५८ न लोकायतवादेन नास्तिकः स्याददैवतः ।
हरिर्हिरण्यकशिपुं जघान स्तम्भनिर्गतः ॥

१२५९ अत्युन्नतपदारूढः पूज्यान्नैवापमानयेत् ।
नहुषः शक्रतां प्राप्य च्युतोऽगस्त्यावमाननात् ॥

१२६० हितोपदेशं शृणुयात् कुर्वीत च [य]थोदितम् ।
विदुरोक्तमकृत्वाऽभूत्कौरवः शोकशल्यभाक् ॥

१२६१ न पुत्रायत्तमैश्वर्यं कुर्यादार्यः कथञ्चन ।
पुत्रार्पितप्रभुत्वोऽभूद् धृतराष्ट्रस्तृणोपमः ॥

१२६२ श्रुतिस्मृत्युक्तमाचारं न त्यजेत् साधुसेवितम् ।
दैत्यानां श्रीवियोगोऽभूत्सत्यधर्मक्रियामुचाम् ॥

१२६३ न कुर्यादभिचारोग्रां वि(व)श्यादिकुहकक्रियाम् ।
लक्ष्मणेनेन्द्रचि(जि)त्कृत्याभिचारसमये हतः ॥

१२६४ व्याकुलोऽपि विपत्पातैः स्मरेद् विष्णुं सदा हृदि ।
शरतल्पगतो भीष्मः सस्मार गरुडध्वजम् ॥

१२६५ नातिनीचैर्न चाप्युच्चै[र्] भवितव्यं फलार्थिभिः ।
स्तोकं नत्वा पिबन्नम्भः कुम्भः प्राप्नोति पूर्णताम् ॥

—क्षेमेन्द्रस्यैते

१२६६ आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्य[म]समो बन्धुस्तं कुर्वन्नावसीदति ॥

१२६७ उद्यमः साहसं धैर्यं बलं बुद्धिः पराक्रमः ।
षडेते यस्य तिष्ठन्ति तस्य दैवं करोति किम् ॥

१२६८ उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदञ्च लक्ष्मीः स्वयं याति निवासहेतोः ॥

१२६९ अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम् ।
प्रमदेव हि वृद्धपतिं नेच्छत्युपगूहितं(तुं) लक्ष्मीः ॥

१२७० आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम् ।
सन्तोषो भि(भी)रुत्वं षड् व्याघाता महत्त्वस्य ॥

१२७१ नाकालो म्रियते कश्चित्प्राप्तकालो न जीवति ।
एवं कालं समालोच्य न कुर्यान्मृत्युतो भयम् ॥

१२७२ आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥

*अथ राजनीतिः । तत्र राजप्रशंसा*

१२७३ बालोऽपि नावमन्तव्यो मनुष्य इति भूमिप ।
महती देवता ह्येषा नररूपेण संस्थिता ॥

१२७४ यस्य प्रसादे सम्पत्तिर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥

१२७५ अशुचिर्यस्य वचनाच्छुचिर्भवति पु(पू)रुषः ।
शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम् ॥

१२७६ निकटस्थं दहत्यग्निर्न तु दूरोपसर्पिणम् ।
कुलं दहति राजाग्निः सपशुद्रव्यबान्धवम् ॥

१२७७ राज(जा)स्य जगतो हेतु[र्]वृद्धेर्वृद्धाभिसम्मतः ।
नयजानन्दजनकः शशाङ्क इव वारिधेः ॥

१२७८ पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥

१२७९ नृपाणाञ्च नराणाञ्च केवलं तुल्यमूर्तिता ।
आधिक्यं तु क्षमाधैर्यमाज्ञा दानं पराक्रमः ॥

१२८० यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः ।
कुलीनो वाऽकुलीनो वा स श्रियो भाजनं भवेत् ॥

१२८१ धवलान्यातपत्राणि वाजिनश्च मनोरमाः ।
सदामत्ताश्च मातङ्गाः प्रसन्ने सति भूपतौ ॥

*तस्य श्रीहेतुः*

१२८२ सदानुरक्तप्रकृतिः प्रजापालनतत्परः ।
विनीतात्मा हि नृपतिर्भूयसीं श्री(श्रि)यमश्नुते ॥

१२८३ धार्मिकं पालनपरं सम्यक्परपुरञ्जयम् ।
राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥

१२८४ कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम् ।
प्रसाधयतु यो लोकं तं लोको नु प्रसा(सी)दति ॥

*तन्नाशे हेतुः*

१२८५ प्रजा न रञ्जयेद् यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥

१२८६ अजामिव प्रजां हन्याद् यो मोहात्पृथिवीपतिः ।
तस्यैका जायते तृप्तिः द्वितीया न कथञ्चन ॥

१२८७ प्रजापीडनसन्तापसमुद्भूतो यथा(हुता)शनः ।
राज्ञः कुलं श्री(श्रि)यं प्राणान्नादग्ध्वा विनिवर्तते ॥

*प्रजागुणः*

१२८८ यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिवर्द्धितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥

१२८९ हिरण्यधान्यरत्नानि गजेन्द्रश्चापि वाजिनः ।
तथाऽन्यदपि यत्किञ्चित्प्रजाभ्यः स्यान्महीपतेः ॥

१२६० राज्ञि धर्मिणि धर्मिष्ठाः पापे पापा[ः] समे समाः ।
लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजाः ॥

*राज्ञः कर्तव्यमाह*

१२६१ आत्मानं प्रथमं राजा विनि(न)येनोपपादयेत् ।
ततोऽमात्यांस्ततोः(तः) पुत्रांस्ततो भृत्यांस्ततोः(तः)प्रजाः॥

१२६२ निर्विषोऽपि यथा सर्पः फणाटोपभयङ्करः ।
तथाडम्बरवान् राजा न परैः परिभूयते ॥

१२६३ पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः ।
रणे विजयसन्देहः प्रधानपुरुषक्षयः ॥

१२६४ भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां न तत्कुर्यात्कथञ्चन ॥

१२६५ सामेव हि प्रयोक्तव्यमादौ कार्यं विजानता ।
सामसिद्धानि कार्याणि विक्रियां यान्ति न क्वचित् ॥

१२६६ न विश्वसेदमित्रस्य मित्रस्यापि न विश्वसेत् ।
विश्वासाद् भयमुत्पन्नं मूलान्यपि निकृन्तति ॥

१२६७ शपथैः सन्धितस्यापि विश्वासं न व्रजेद् रिपोः ।
राज्यलोभोद्यतो वृत्रः शक्रेण शपथैर्हतः ॥

१२६८ उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥

१२६९ नोपेक्षितव्यो विद्वद्भिः शत्रुरल्पोऽप्यवज्ञया ।
वह्निरल्पोऽपि संवृद्धः कुरुते भस्मसाद् वनम् ॥

१३०० कौर्मं संकोचमास्थाय प्रहारानपि मर्षयेत् ।
काले काले च मतिमानुत्तिष्ठेत्कृष्णसर्पवत् ॥

१३०१ तावद् भयस्य भेतव्यं यावद् भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥

१३०२ देवब्रह्मस्वपुष्टानि सैन्यानि पृथिवीपतेः ।
युद्धकाले विशीर्यन्ते सिकतासेतवो यथा ॥

१३०३ माता पिता गुरुर्भ्राता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति स्वधर्मे यो न तिष्ठति ॥

१३०४ अवध्यसं(ध्यो?)ब्राह्मणो बालः स्त्री तपस्वी च रोगवान् ।
क्रियन्ते व्यंगताह्ये षु(?)ततो दोषैर्न लिप्यते ॥

१३०५ न तु हि(ह)न्यान्महीपालो दूतं कस्यचिदापति(?) ।
दूतहन्ता तु नरकमाविशेत्सचिवै[ः] सह ॥

१३०६ क्रूरं व्यसनिनं लुब्धमप्रगल्भमथाकुलम् ।
मूर्खमन्यायकर्तव्यं नाधिपत्ये नियोजयेत् ॥

१३०७ नियोगिभिर्विना राज्यं नास्ति भूपे हि केवलम् ।
तस्मादमी विधातव्या रक्षितव्याः प्रयवोहि(यत्न)तः ॥

१३०८ षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णः स्थिरो भवेत् ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माऽप्यन्तं न गच्छति ॥

१३०९ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न च पत्तिभिः ।
कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥

१३१० दुर्योधनः समर्थोऽपि दुर्मन्त्रैः प्रलयं गतः ।
राज्यमेवञ्चकारोच्चैः सुमन्त्री चन्द्रगुप्तकः ॥

१३११ त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद् यथावत्तान् त्रिविधेष्वेव कर्मसु ॥

१३१२ तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्द्धराज्यहरं मित्र्यं(त्रं) यो न हन्यात् स हन्यते ॥

१३१३ निर्विशेषे यदा राजा सर्वभृत्येषु तिष्ठति ।
तत्रोद्यमसमर्थानामुत्साहः परी(रि)हीयते ॥

१३१४ प्रसादो निःफलो यस्य यस्य क्रोधो निरर्थकः ।
न तं गणयते कश्चिद् वृद्धं पतिमिवाङ्गनाः ॥

१३१५ अविवेकिनि भूपाले नश्यन्ति गुणिनां गनाः(गुणाः) ।
प्रवासरसिके कान्ते यथा साध्व्याः स्तनोन्नतः ॥

१३१६ न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ।
होतारमपि जुह्वन्तं दहत्येवै(व) हि पावकः ॥

१३१७ अतितेजस्व्यपि राजा पानासक्तो स(न) साधयत्यर्थान् ।
तृणमपि दुग्धं(दग्धुं)शक्तो न वाडवाग्निर्जलं पिबन्ननिशम् ॥

१६१८ पानमक्षास्तथा नार्यो मृगयागीतवादीते (?) ।
एतानि युक्तया सेवेत प्रसङ्गो ह्यत्र दोषभाक् ॥

१३१९ नृपः कामासक्तो न गणयति कार्यं न च हितं
यथेष्टं स्वच्छन्दश्चरति किल मत्तो गज इव ।
ततो मानाध्मातः पतति तु यदा शोकगहने
तदाऽमात्ये दोषान् क्षिपति न तदा वेत्त्यविनयम् ॥

१३२० ताडितोऽपि दुरुक्तोऽपि दण्डितोऽपि महीभुजा ।
न चिन्तयति [यः] पापं स भृत्योऽर्हो महीभुजाम् ॥

१३२१ योऽनाहूतः समभ्येति द्वारे तिष्ठति सर्वदा ।
पृष्टं(ष्टः)सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥

१३२२ सालसं मुखरं क्रूरं व्यग्रं व्यसनिनं शठम् ।
असन्तुष्टमभक्तञ्च त्यजेद् भृत्यं नराधिपः ॥

१३२३ रिक्ताः कर्मणि पटवस्तृप्तास्त्वलसा भवन्ति ये भृत्याः ।
तेषां जलौकसामिव पूर्णानां रिक्तता कार्या ॥

१३२४ सारासारपरिच्छेत्ता स्वामी भृत्यस्य दुर्लभः ।
अनुकूलः शुचिर्दक्षः प्रभोर्भृत्योऽपि दुर्लभः ॥

१३२५ राजा तुष्टस्तु भृत्यानां मानमात्रं प्रयच्छति ।
ते तु सम्मानिता ह्येषां प्राणैरप्युपकुर्वते ॥

१३२६ द्विजा अपि न गच्छन्ति तां गतिं नैव योषितः ।
स्वाम(म्य)र्थे संत्यजन् प्राणान् यां मतिं याति सेवकः ॥

१३२७ त्यजेत्स्वामिनभि(म)त्युग्रमृ(म)त्युग्रात्कृपणं त्यजेत् ।
कृपणादविशेषज्ञं तस्माच्च कृतनाशनम् ॥

१३२८ विशोधयेन्महीपालोमन्त्री(न्त्रि)शालामशेषतः ।
अयुक्तो नार्हति स्थातुमस्यां मन्त्ररहस्यवित् ॥

१३२९ मन्त्रतन्त्रार्पितप्रीति[र्] देशकालोचितस्थितिः ।
यश्च राज्ञी(ज्ञि) भवेद् रक्तः सोऽमात्यः पृथिवीपतेः ॥

१३३० अन्तःसारैरकुटिलैः सुस्निग्धैः सुपरीक्षकैः ।
मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥

१३३१ नरपतिहिरि(त)कर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥

१३३२ अशृण्वन(न्न)पि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः ।
यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥

१३३३ पृष्टो(ष्टः) प्रियं न यो ब्रु(ब्रू)यात्परिणामसुखावहम् ।
मन्त्री चेत्प्रियवक्ता स्यात्केवलं स रिपुः स्मृतः ॥

१३३४ सुलभाः पुरुषाः राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥

१३३५ वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशि(शी)र्वादपरो नित्यमेष राज्ञः पुरोहितः ॥

१३३६ क्रमागतो हितमतिः सर्वभावपरीक्षकः ।
धीरो यथो(क्त)वादी च दूत एवंविधो मतः ॥

१३३७ प्रवीणो वाक्पटुर्धीमान् स्वामिभक्तश्च नित्यशः ।
अलुब्धः सत्यवादी च भाण्डागारिक इष्यते ॥

१३३८ मेधावी वाक्पटुर्धीरो लघुहस्तो जितेन्द्रियः ।
परचित्तपरिज्ञाता राज्ञो लेखक उच्यते ॥

१३३९ इंगिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
स्वपरज्ञः स्वाभिभक्तः प्रतीहार[ः] स इष्यते ॥

१३४० शूरोऽर्थशास्त्रन्नि(नि)पुणः कृतशस्त्रकर्मा
संग्रामकेलिचतुरो रणरङ्गधीरः ।

भर्तुर्निदेशवशगोऽभी(भि)मतश्च तन्त्रे
सेनापतिर्नरपते[र्]विजयाय दिष्टः ॥

१३४१ प्रहिष्याहृष्टया(?) भाव्यं गृहकार्येषु दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥

१३४२ सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्याश्च सर्वदा ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥

१३४३ पक्वान्नमिव राजेन्द्र सर्वसाधारणाः स्त्रियः ।
परोक्षश्च समक्षश्च न तासां विश्वसेत्सुधीः ॥

१३४४ काणाश्च जरठाश्चैव तथा वृद्धाश्च पङ्गवः ।
एतेषां न पुरे नित्यं नियोक्तव्याः क्षमाभृता ॥

१३४५ धर्मशास्त्रार्थ कुशलाः कुलीनाः सत्यवादिनः ।
समाः शत्रौ च मित्रे [च] नृपतेः स्युः सभासदः ॥

१३४६ दुर्गानि(णि) राज्ञा कार्याणि सजलानि दृढानि च ।
द्रव्यमन्नं च तेष्वेव स्थापनीयं प्रयत्नतः ॥

१३४७ दुर्गं बहुविधं ज्ञेयं पर्वतस्य जलस्य च ।
प्राकारस्य वनस्यापि भूमेरपि भवेत् क्वचित् ॥

१३४८ न गजानां सहस्रेण न लक्षेण च वाजिनाम् ।
तथा सिद्ध्यन्ति कार्याणि यथा दुर्गप्रभावतः ॥

१३४९ विषहीनो यथा नागो मदहीनो यथा गजः ।
सर्वेषां वश्यतां याति दुर्गहीनस्तथा नृपः ॥

१३५० श(त)मेकोपि सन्धत्ते प्राकारस्थो धनुर्धरः ।
तस्मा[द्]दुर्गं प्रशंसन्ति नीतिमार्गविदो जनाः ॥

१३५१ चक्रचारी नृपः सेव्यो न नृपश्चक्रवर्जिन(तः) ।
पश्य चक्रस्य माहात्म्यं मृत्पिण्डः पात्रतां गतिः(तः) ॥

१३५२ वरं विषादनं राज्ञो वरमग्निप्रवेशनम् ।
अनाथानां प्रपन्नानां कृपणानामरक्षणात् ॥

१३५३ बुद्ध्यायुधो रक्षितमन्त्रतत्त्वः सत्त्वेन संवर्मितचित्तवृत्तिः ।
देशं बलं कालमवेक्ष्य कर्ता तस्येन्द्र(?)वज्राहतिरप्यपार्था ॥
—वैद्यभानुपण्डितस्य

१३५४ उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वन् लघून् वर्धय-
न्नत्युच्चान्नमयन् पृथूंश्च लघयन् विश्लेषयन् संहतान् ।
क्षुद्रान् कण्टकिनो बहिर्निरस्यन् संरोपितान्पालयन्
मालाकार इव प्रयोगचतुरो राजा चिरं नन्दति ॥

१३५५ अकृत्वा न्नि(नि)जरक्षां यो देशस्य विजिगीषते ।
स नृपः परिधानेन त्यक्तमौलिः पुमानिव ॥

१३५६ कोऽहं कौ देशकालौ समविषयगुणाः केरयः के सहायाः
का शक्तिः कोऽभ्युपायः फलमिह च कियत् कीदृशी दैवसम्पत् ।
सम्पत्तौ को निबन्धः प्रविदितवचनस्योत्तरं किं नु मे स्या-
दित्येवं कार्यसिद्धाववहितमनसो हस्तगाः सम्पदः स्युः ॥

१३५७ स्वाम्यमात्यश्च राष्ट्रञ्च कोशो दुर्गं बलं सुहृत् ।
एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रि(श्र)यम् ॥

१३५८ धर्मः प्रागेव चिन्त्यः सचिवमतिगतिर्योन(ज)नीया सदैव
ज्ञेयं लोकानुवृत्तं वरचरनयनैर्मण्डलं वीक्षणीयम् ।
प्रच्छाद्यौ रागरोषौ मृदुपरुषयुतौ योजनीयौ च काला(ले)
स्वात्मा यत्नेन रक्ष्यो रणशिरसि पुनः सोऽपि नोपेक्षणीया(यः)॥

१३५९ जानन्ति पशवो गन्धाद् वेदाज्जानन्ति पण्डिताः ।
चाराद् विदन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥

१३६० नाप[री]क्ष्य नयेद्दण्डं न च मन्त्रं प्रकार(श)येत् ।
न कार्यं विसृजेल्लुब्धं विश्वसेन्नापकारिषु ॥

१३६१ परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकु[म्भं] पयोमुखम् ॥

१३६२ एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम् ।
आदिमध्यावसानै(ने)न [न]ते यास्यन्ति विक्रियाम् ॥

१३६३ सर्व एव जनः शूरे(रो) ह्यनासादितसंगरः ।
अदृष्टपरसामर्थ्यः सदर्पः को भवेन्न हि ॥

१३६४ मंत्रिणा [हि] महीपालचित्तं विघटितं क्वचित् ।
वलयं स्फटिकस्येव को हि सन्धातुमीश्वरः ॥

१३६५ यत्रात्मीयो जनो नास्ति मन्त्रस्तत्र न भिद्यते ।
कुठारैर्दण्डनिर्मुक्तैर्भिद्यन्ते तरवः कथम् ॥

१३६६ मन्त्राणि भिन्नसान्धाने भिषजां सान्निपातके ।
कर्मनावृज्यते(?)प्रज्ञा सुस्थः को वा न पण्डितः ॥

*अथ नवरत्नम्*

१३६७ धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥

*श्लोकनामानि*

१३६८ मित्रमर्थी तथा नीतिधर्मकार्पण्यमूर्खता ।
स्त्रीणां विद्वानथो ख्याता(?)न्नवरत्नमिदं क्रमात् ॥

१३६९ मित्रं स्वच्छतया रिपुं नयबलै[र्]लुब्धं धनैरीश्वरं
कार्येण द्विजमादरेण युवतिं प्रेम्णा शमैर्बान्धवान् ।
अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं
विद्याभी रसिकं रसेन सकलं शीलेन कुर्याद् वशम् ॥

१३७० अर्थी लाघवमुच्छ्रितो निपतनं कामातुरो लाञ्छनं
निःस्वो वञ्चनमुन्मना विकलतां दोषाकुलः संशयम् ।
लुब्धोऽकीर्तिमसङ्गरः परिभवं दुष्टोऽन्यदोषे रतिं
दुर्वागप्रियतां दुरोदरवशः प्राप्नोति कष्टं मुहुः ॥

१३७१ नि(नी)ति[र्]भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां धृ(र)ति-
र्दम्पत्योः शिशवो गृहस्य[क]विता बुद्धेः प्रसादो गिराम् ।
लावण्यं वपुषः स्मृतिः सुमनसां शान्तिर्द्विजस्य क्षमा
शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां मण्डनम् ॥

१३७२ धर्मः प्रागेव चिन्त्यः सचिवनतिगतिर्भावनी या सदैव
ज्ञेयं लोकानुवृत्तं वरचरनयनैर्मण्डलं वीक्षणीयम् ।
प्रच्छाद्यौ रागदोषौ मृदुपरुषरसौ योजनि(नी)यौ च काले
स्वात्मा यत्नेन रक्ष्यो रणशिरसि पुनः सोऽपि नापेक्षणीयः ॥

१३७३ कार्पण्येन यशः क्रुधा गुणचयो दम्भेन सत्यं क्षुधा
मर्यादा व्यसनैर्धनानि विपदा स्थैर्यं प्रमादैर्द्विजः ।
पैशुन्येन कुलं मदेन विनयो दुश्चेष्टया पु(पौ)रुषं
दारिद्र्ये[ण]जनादरो ममतया चात्मप्रकाशो हतः ॥

१३७४ मूर्खोऽशान्तस्तपस्वी क्षितिपतिरलसो मत्सरी धर्मशीलो
दुःस्थो मानी गृहस्थः प्रभुरतिकृपणः शास्त्रविद्धर्महि(ही)नः ।
प्रज्ञाहि(ही)नो नरेन्द्रः शुचिरपि सततं यः परान्नोपजीवी
वृद्धो रोगी दरिद्रः स च युवतिपतिर्धिग् विडम्बप्रकारान् ॥

१३७५ विद्वान्संसदि पाक्षिकः परवशो मौनी दरिद्रो गृही
द्रव्याढ्यः कृपणः सुखी परवशो वृद्धो न तीर्थाश्रितः ।
राजा दुःसचिवप्रियः कुलभवो मूर्खः पुमान् स्त्रीजितो
वेदान्ती ह[त]सत्क्रियः किम[प]रं हास्यास्पदं भूतले ॥

१३७६ स्त्रीणां यौवनमर्थिनामनुगमो राज्ञां प्रतापः सतां
स्वास्थ्यं स्वल्पधनस्य संहतिरसद्वृत्तेस्तु वाग्डम्बरः ।
स्वाचारस्य सदर्चनं परिणतेर्विद्या कुलस्यैकता
प्रज्ञाया धनमुन्नते[र्] गुणचयः शान्तेर्विवेको बलम् ॥

१३७७ उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वन् लघून् वर्धय-
न्नत्युच्चान्नमयन् पृथूंश्च लघयन् विश्लेषयन् संहतान् ।
क्षुद्रान् कण्टकिनो बहिर्निरसयन् संरोपितान् पालयन्
मालाकार इव प्रपञ्च[च]तुरो राजा चिरं नन्दति ॥

*सर्वप्रकीर्णकम्*

१३७८ दीनादीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः करुणं नरैर्न विधुरा दृश्येत चेद् गेहिनी ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदे[त्]स्वदग्धजठ[र]स्यार्थे मनस्वी जनः ॥

१३७९ हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं
व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः ।

संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥

१३८० न ध्यातं पदमीश्वरस्य सततं संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥

१३८१ तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान् दारानुत परिचरामः सविनयम् ।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसा-
न्न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥

१३८२ अभिमतमहा[मा]नग्रन्थिप्रभेदकृपाणिका
गुरुतरगुणग्रामाम्भोजप्रणाशकुहेलिका ।
विपुलविलसल्लज्जावल्लीविदारिकुठारिका
जठरपिठरी दुःपूरेयं करोति विडम्बनाम् ॥

—श्रीभर्तृहरेः

१३८३ तृषार्तैः सारङ्गैः प्रतिजलधरं भूरि विरुतं
घनैर्मुक्ताधाराः सपदि पयसस्तान् प्रति मुहुः ।
खगानां के मेघाः क इह विहगा वा जलमुचा-
मवाच्यो नार्तानामनुपकरणीयो न महताम् ॥

१३८४ कुसुमानि लिखन्तु नाम चित्रे कतिचित्कालविशेषरूढशिक्षाः ।
सुरभित्वममूनि किं लभन्ते पुनरेतेषु रसं पिबन्ति भृङ्गाः ॥

१३८५ सच्छिद्रो मध्यकुटिलः कर्णः स्वर्णस्य भाजनम् ।
धिग्दैवं निर्मलं नेत्रं पात्रं कज्जलभस्मनः ॥

१३८६ जम्भारिरेव जानाति रम्भासम्भोगविभ्रमम् ।
घटचेटीविटः किंस्विज्जानात्यमरकामिनीम् ॥

१३८७ मलोत्सर्गं गजेन्द्रस्य मूर्ध्नि काकः करोति यत् ।
कुलानुरूपं तत्तस्य यो गजो गज एव सः ॥

१३८८ ग्रसाद् गलितसिक्थस्य करिणः किं गतं भवेत् ।
पिपीलिकस्तु तेनैव सकुटुम्बोऽपि जीवति ॥

१३८९ बन्धवस्थो हि मातङ्गः सहस्रभरणक्षमः ।
अपि स्वच्छन्दचारी श्वा स्वोदरेणापि दुःखितः ॥

१३९० यदि धनिनः सत्पुरुषा यदि च सुरूपाणि परकलत्राणि ।
अनुपचितसुकृतसञ्चय तव हृदय किमाकुलीभावः ॥

१३९१ यदि राम ए[व] दाता तेषां तुभ्यं ददाति रे न स किम् ।
नाराधित इति यदि हा तत्किं दैन्यं परानतेऽञ्जसि ॥

१३९२ व्याकुर्वन्तु कुशाग्रतीव्रमतयः शास्त्राणि नव्यानि वा
काव्यानि ग्रथयन्तु सत्कविचमत्कारिणी(रीणि) भूरीण्यपि ।
विद्वांसस्तु त एव येऽच्युतगुणव्यावर्णनाकर्णन-
क्रीडोत्तीर्णभवार्णवा जगदघध्वंसाय जीवन्ति हि ॥

१३९३ एते मूर्द्धकचाः सकङ्कणरणत्काणाटसीमन्तिनी-
हस्ताकर्षणलालिताः सुललिता वृद्धिं परामागताः ।
तेऽमी सम्प्रति पापिनापितकरभ्राम्यन्निशातक्षुर-
क्षुण्णाः क्षोणितले लुठन्ति पुरतः प्राप्तापराधा इव ॥

१३९४ वासः शुभ्रमृतुर्वसन्तसमयः पुष्पं शरन्मल्लिका
धानुष्कः कुसुमायुधः परिमलः कास्तूरिकोऽस्त्रं धनुः ।
वाणी तर्करसोज्ज्वला प्रियतमा श्यामा वयो नूतनं
मार्गः शाम्भव एव पञ्चमलया गीतिः कविर्बिल्हणः ॥

१३९५ भाषा गोपगिरेः सरित्सुरधुनी लीला च शत्रुञ्जया
वीणा वाद्यमथो नवा प्रणयिनी रागश्च कार्णाटकः।
धर्मः प्राणिदया गुणश्च विनयस्तीर्थं च वाराणसी
शास्त्रं व्याकरणं कविश्च सुकृती श्रीगीतगोविन्दकृत्॥

१३९६ विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद् विन्ध्यस्तरेत्सागरम्॥

१३९७ सिंहो बली द्विरदशूकरमांसभोजी
संवत्सरेण कुरुते रतिमेकवारम्।
पार(रा)पतः खलु शिलाकणमात्रभोजी
कामी भवेदनुदिनं वद कोऽत्र हेतुः॥

१३९८ क्षोणीशाश्रयिणां परोपकरणाभावादवाप्तश्रियां
कार्पण्यात्सुधियामनध्ययनतो यूनां प्रवासाश्रयात्।
ज्ञातॄणां जगदीशभक्तिविरहात्कालो वृथा गच्छति
ह्येवं ताससमुद्भवः प्रतिदिनं नादो वदत्युच्चकैः॥

१३९९ उत्पन्ना यदि जागडीपु(?) कविता किं तत्कृतैः सीकृतैर(संस्तुतैर्?)
भूपाले यवने समस्तमवनेवैंदग्ध्यन(म)स्तङ्गतम्।
बिंदी विन्दति यत्र पात्रपदवीं शिष्टैर्विशिष्टैरलं
पुम्भिश्चेदुपलभ्यते रतिसुखं क्वेणीदृशामादरः॥

१४०० पह्यागच्छ समाविशासनमिदं प्रीतोऽस्मि ते दर्शनात्
का वार्ता परिदुर्बलोऽसि च कथं कस्मा[च्]चिराद् दृश्यसे।
इत्येवं गृहमा[ग]तस्य विनयं कुर्वन्ति ये सादरा-
स्तेषां गेहमशङ्कितेन मनसा गन्तुं समभ्युत्सहे॥

१४०१ का भूषा बलिनां क्षमा परिभवः को यः स्वकुल्यैः कृतः
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते ।
को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
कैर्विज्ञातमिदं विराटनगरच्छन्नस्थितैः पाण्डवैः ॥

१४०२ या पाणिग्रहलालिता सुसरला तन्वी सुवंशोद्भवा
गौरी स्पर्शसुखावहाऽतिसुभगा नित्यं मनोहारिणी ।
सा केनापि हृता तया विरहितो गन्तुं न शक्नोम्यहं
भिक्षो किं तव कामिनी नहि नहि प्राणप्रिया यष्टिका ॥

१४०३ धनं यदि गतं गतं चरणयुग्मरेणूपमं
धरा यदि गता गता कथ[य] नः किमेतावता ।
परन्त्विदमरुन्तुदं धनिजनैरिदानीन्तनै-
र्दरिद्रगणनान्तरे मम यदङ्कपातः कृतः ॥

१४०४ जात्यन्धाय च दुर्जनाय च गलत्कुष्ठाभिभूताय च
ग्रामीणाय च दुःकुलाय च जराजीर्णाखिलाङ्गाय च ।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेकपूर्णहृदयः को वा पुमान् रज्यते ॥

१४०५ वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसा
निर्गन्धं कुसुमं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं सेवकाः
सर्वः स्वार्थवशाज्जनोऽभिरमते नो कस्य कोप्यात्तचः(त्मनः)॥

१४०६ स्पर्द्धन्तां सुखमेव कुञ्जरतया दिक्कुञ्जरैः कुञ्जरा
ग्राम्या वा वनवासिनो मदजलप्रक्लिन्नगण्डस्थलाः ।
आः कालस्य कुतूहलं शृणु सखे प्राचीनपालीमला-
स्वादस्निग्धकपोलपालिरधमः कोलोऽपि संस्पर्द्धते ॥

१४०७ उन्न[दा]म्बुदवर्धितान्धतमसि प्रभ्रष्टदिङ्मण्डले
काले यामिकजाग्रदुग्रसुभटव्याकीर्यमाणे पथि ।
कर्णस्य द्विषदर्णवस्य वडवावह्नेर्यदन्तःपुरा-
दायातासि तदम्बुजाक्षि कृतकं मन्ये भयं योषिताम् ॥

१४०८ उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बने
व्योम्नि भ्राम्यति दुर्गमक्षितिभुजां मूर्द्धानमारोहति ।
व्याप्तं याति विषाकुलैरहिकुलैः पातालमेकाकिनी
कीर्तिस्ते मदनाभिराम कृतकं मन्ये भयं योषिताम् ॥

—खञ्जकवेरेतौ

१४०९ नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनोदोचिता
खड्गाग्रैररिकुम्भपीठदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निःफलमहो शून्यालये दीपवत् ॥

१४१० हेमन्ते हरिणदृशां हुताशगौर-
मापीनस्तनयुगलं भृशं युवानः ।
सेवन्तेऽधरमधुरामृतं हि तेषां
शीतं किं लगति जगत्प्रकम्पकारि ॥

१४११ गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते तदिह मम नो विस्मयपदम् ।
यतो जीमूतास्ये लवणमुदधेर्वारि मधुरं
फणी पीत्वा क्षीरं वमति गरलं दुःसहतरम् ॥

१४१२ सौजन्याम्बुमरुस्थली सुजनतालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषाऽपि दुराष(श)या कलियुगे दुष्टावली सेव्यते
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥

१४१३ अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः ।
इतरेन्धनजन्मा यो धूमः सोऽगुरुसमुद्भवो धूपः ॥

—गोवर्द्धनस्यायम्

१४१४ उडुगणपरिवारो नायकोऽप्यौषधीना-
ममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः ।
भवति विकि(क)लमूर्तिर्मण्डलं प्राप्य भानोः
परसदननिविष्टः को लघुत्वं न याति ॥

१४१५ नभोभूषा पूषा नवनलिनभूषा मधुकरो
वचोभूषा सत्यं वरयुवतिभूषा सुगुणता ।
मनोभूषा तोषो मधुसमयभूषा पिककुलं
सभाभूषा विद्वान् सकलगुणभूषा वितरणम् ॥

१४१६ तपःसीमा मुक्तिः सकलगुणसीमा वितरणं
कलासीमा काव्यं जननसुखसीमा सुवदना ।
श्रियां सीमा भुक्तिः सुकृतचयसीमाश्रितभृति-
र्भियां सीमा मृत्युः श्रवणसुखसीमा हरिकथा ॥

१४१७ निशारत्नं चन्द्रः शयनतलरत्नं श[शि]मुखी
सभारत्नं विद्वान् श्रवणपुटरत्नं हरिकथा ।
कलारत्नं गीतं गगनतलरत्नं [दिनकरः?]
[पुरी]रत्नं काशी जयति नृपरत्नं रघुपतिः ॥

१४१८ विद्यारत्नं सरसकविता यानरत्नं तुरङ्गो
वाञ्छारत्नं परमपदवी भोगरत्नं मृगाक्षी ।
अम्भोरत्नं त्रिदशतटिनी कालरत्नं वसन्तो
भूभृद्रत्नं कनकशिखरो भूपरत्नं च रामः ॥

१४१९ पुण्यं पुण्यजलेषु यत्प्रपतितं शुक्तौ च मुक्ताफलं
कर्पूरं कदलीदलेषु गरसं(लं) व्यालानने कर्दमः ।

कौ क्षारं (?) हि पुनस्तदेव पतितं क्षीराम्बुधौ जायते
तद्वद्दानमपि(पी)ह सम्प्रति यतः पात्रानुरूपं फलम् ॥

१४२० चन्द्रे लाञ्छनता हिमं हिमगिरौ क्षारं जलं सागरे
रुद्धाश्चन्दनपादपा विषधरैरम्भोरुहं कण्टकैः ।
स्त्रीरत्नेषु जरा कुचेषु पतनं विद्वत्सु दारिद्रता
सर्वं रत्नमुपद्रवेण सहितं निर्दोषमेकं यशः ॥

स्वायत्तमेकान्तहितं विधात्रा [वि]निर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणं मौन[म]पण्डितानाम् ॥

१४२२ दुर्जनविभववियोगः प्रियसखिसन्देशितानि वाक्यानि ।
उक्तान्यपि कथय सखे पुनरपि तान्येव तान्येव ॥

१४२३ यत्रोदकं तत्र वसन्ति हंसा यत्रामिषं तत्र पतितं(तन्ति) गृध्राः ।
यत्राढ्यता तत्र रमन्ति रामा यत्राकृतिस्तत्र गुणा वसन्ति ॥

१४२४ गम्यते यदि मृगेन्द्रमन्दिरं लभ्यते द्विरददन्तमौक्तिकम् ।
जम्बुकालयगतेन लभ्यते वत्सपुच्छखरचर्मखण्डकम् ॥

१४२५ दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि
मित्रावसानसमये विहितोदयोऽपि ।
चन्द्रस्तथापि हरवल्लभतामुपैति
नैवाश्रितेषु गुणदोषविचारणा स्यात् ॥

१४२६ मनसः परमाणुतां वदन्तः
कथमद्यापि न तार्किकास्त्रपन्ते ।
कनकाचलजित्वरस्तनीनां
तरुणीनामपि यत्र सन्निवेशः ॥

१४२७ मणिना वलयं वलयेन मणि-
र्मणिना वलयेन विभाति करः ।
शशिना च निशा निशया च शशी
निशया शशिना च विभाति नभः ॥

१४२८ वार्ता च कौतुकवती विमि(म)ला च विद्या
लो[को]त्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
मेतत्त्रयं प्रसरतीति किमत्र चित्रम् ॥

१४२९ एकवापीभवं तोयं पात्रापात्रविशेषतः ।
आम्रे मधुरवा(ता)मेति निम्बे कटुकतामपि ॥

१४३० आदाने यादृशी बुद्धिर्निर्गमे नैव तादृशी ।
हसन्ती धारयेद् गर्भं रुदन्ती(ती) परिमुञ्चति ॥

१४३१ किं तया क्रियते तात विदेशार्जितया श्रिया ।
स्वजना यां न भुञ्जन्ति यां न पश्यन्ति वे(वै)रिणः ॥

१४३२ उषा प्रशंसते(?)गर्गः शकुनश्च बृहस्पतिः ।
अङ्गिरामातनोसाहं(?)द्विजवाक्यं जनार्दनः ॥

१४३३ यच्चिन्तितं तदिह दूरतरं प्रयाति
यच्चेतसाऽपि न धृतं तदिहाभ्युपैति ।
प्रातर्भवामि भुवनाधिपचक्रवर्ती
सोऽहं व्रजामि विपिनं जटिलस्तपस्वी ॥

१४३४ प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं नहि तत्परेषाम् ॥

१४३५ अयमान्दोलिकादण्डः स्कन्धे किं तव बाधति ।
नायमान्दोलिकादण्डस्तव बाधति बाधते ॥

१४३६ चिन्तातुराणां न सुखं न निद्रा
कामातुराणां न भयं न लज्जा ।
क्षुधातुराणां न बलं न तेजो
अर्थातुराणां स्वजनो न बन्धुः ॥

१४३७ पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोऽपि जम्बूफलभ्रान्त्या तमलिं संजिघृक्षति ॥

१४३८ अयं मरकतस्तम्भे भाति पारावतः खगः ।
पाञ्चजन्य इवोद्दण्डे दोर्दण्डे मुरवैरिणः ॥

—दम्पत्योरयम्

१४३९ मन्दिरमधि नरतरुणाः परिणतकेदारपरिसरे हरिणाः ।
इति युवजानिर्हालिको गतागतैरेव यामिनीं नयति ॥

१४४० सञ्चिन्त्य सञ्चिन्त्य जगत्समस्तं
त्रयः पदार्था हृदयं प्रविष्टाः ।
इक्षोर्विकारा मतयः कवीनां
मुग्धाङ्गनापाङ्गतरङ्गितानि ॥

१४४१ दधि मधुरं मधु मधुरं द्राक्षा मधुरा सुधा तु मधुरैव ।
तस्य तदेव [हि] मधुरं यस्य मनो यत्र संलग्नम् ॥

१४४२ सुरताय नमस्तस्मै जगदानन्ददायिने ।
आनुषङ्गिफलं यस्य भोजराज भवादृशाः ॥

१४४३ गूर्जरा दुर्जनाः सर्वे ब्राह्मणाश्च विशेषतः ।
सत्यं नास्ति दया नास्ति सदैव परनिन्दकाः ॥

१४४४ नागरजातिरदुष्टा शीतो वह्नि्नर्निरामयः कायः ।
स्वादु च सागरसलिलं स्त्रीषु सतीत्वं न सम्भवति ॥

१४४५ कठिनत्वादुःकृत्वा(?)तीक्ष्णत्वान्नामसाम्याच्च ।
नाग्गरयोरद्वतं(?)स्याद् यदि नैकस्य चार्द्रजन्यत्वम् ॥

—हरिकवेर्ममायम्

१४४६ पुण्यक्षये नीचजनोपसेवा पापक्षये भक्तिरधोक्षजस्य ।
धनक्षये वर्द्धति जठराग्निः कुलक्षये ब्रह्मकुलेषु रोषः ॥

१४४७ आवासः क्रियतां गाङ्गे पापवारिणि वारिणि ।
स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥

१४४८ यन्न कान्तामुखोच्छिष्टं यन्न संस्कृतवाक्पटु ।
यन्न गीतरसैर्भिन्नं तन्मुखं विवरं विदुः ॥

१४४९ मा पुत्र साहसं कार्षीः क्वचिदेवंविधे पुनः ।
न दृष्टो न श्रुतो वाऽपि शिलायाभं(म?)कुलोद्भवः ॥

१४५० राजा चारुगति[ः]शशाङ्कधवलं छत्रं प्रिया पृष्ठतः
प्रोत्तुङ्गस्तनमण्डला विजयिनो भृत्याः पुरः पञ्चषाः ।
ताम्बूलं प्रचू(चु)रं सखाऽतिचतुरः सम्पद्यते चेत्पथि
प्राहुस्तत्कट[क]प्रयाणमितरत्प्राणप्रयाणं बुधाः ॥

१४५१ कलाधिनाथाधिगमा[द्]द्वितीये किमद्वितीयेव तनोषि मादं(?) ।
दापुनर्मद्वचसि प्रसीया खलस्तृतीयामपि गन्तुकामः(?) ॥

१४५२ जातिस्मराणि नेत्राणि जानन्ति प्रियमप्रियम् ।
विकसन्ति प्रिये दृष्टे संकुचन्त्यप्रिये पुनः ॥

१४५३ यत्रोदारा दारास्तत्र न कान्तः स्वतः कान्तः ।
यत्र तु कान्तः कान्तस्तत्र न दारा गुणोदाराः ॥

१४५४ देशः कालः पात्रं करोति वित्तस्य किमपि मही(हि)मानम् ।
उदधितटे शुक्तिपुटे स्वां(स्वा)तौ घनतोयमेति मणिभावम् ॥

१४५५ गोभिर्विप्रैश्च वेदैश्च सति(ती)भिः सत्यवादिभिः ।
अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥

१४५६ दुर्भिक्षे चान्नदातारं सुभिक्षे च हिरण्यदम् ।
चतुरोऽहं नमस्यामि रणे शूरमृणे शुचिम् ॥

—श्रीमद्व्यासभगवतः

१४५७ किमादर्शेन चान्धस्य किं गृहैर्भ(भैं)त्यजीव(वि)नः ।
किं पुस्तकेन मूढस्य निःस्त्रीकस्य धनेन किम् ॥

१४५८ आमन्त्रणोत्सवा विप्रा गावो नवतृणोत्सवाः ।
कान्तोत्सवा[ः] कुरङ्गाद्यस्तथा शूरा रणोत्सवाः ॥

१४५९ अलङ्कारप्रियो विष्णुरभिशे(षे)कप्रियः शिवः ।
नमस्कारप्रियो भानुर्ब्राह्मणो भोजनप्रियः ॥

१४६० पयः शरदि यत्पीतं यद्भुक्तं पौषमाघयोः ।
वैशाखज्येष्ठयोः सुप्तं तेन जीवन्ति जन्तवः ॥

१४६१ त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
आ(अ)त्युग्रपुण्यपापानामिहैव फलमश्नुते ॥

१४६२ मद्भक्तः शङ्करद्वेषी मद्द्वेषी शङ्करप्रियः ।
तावुभौ नरकं यातो यावच्चन्द्रार्कतारकम् ॥

१४६३ परात्परतरं यान्ति नारायणपरायणाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥

—पुराणादेतौ

१४६४ आत्मानं चेद् विनिन्दन्ति निन्दन्त्यात्मानमेव ते।
शरीरं चेद् विनिन्दन्ति निन्दामो वयमेव तत् ॥
—श्रीमच्छङ्कराचार्याणाम्

१४६५ न विष्णोरपरस्त्राता नाहङ्कारात्परो रिपुः ।
न वैराग्यात्परं भाग्यं न बुद्धेरपरं सुखम् ॥

१४६६ इज्यया पितृदेवानां प्रपया(?)तीर्थसेवया ।
सुहृन्मी(न्मि)त्रात्मभोगेन धनं गच्छति धर्मिणाम् ॥

१४६७ प्रायश्चित्तेन दण्डेन वेश्याभोगेन भारत ।
द्यूतेनाग्निप्रमादाभ्यां धनं गच्छति पापिनाम् ॥

१४६८ पापनिन्दाभयं वैरं चत्वार्येतानि देहिनाम् ।
स्वप्नमार्गप्रवृत्तानां तिष्ठन्त्येव हि सर्वदा ॥

१४६९ अरिर्मित्रं विषं पथ्यमधमो(र्मो)धर्मतां व्रजेत् ।
अनुकूले जगन्नाथे विपरि(री)ते विपर्ययः ॥

१४७० ग्रामे वासो नायका(को) निर्विवेकः
कौटिल्यानामेकपात्रं कलत्रम् ।
नित्यं रोगः पारवश्यञ्च पुंसा-
मेतत्सर्वं जीवतामेव मृत्युः ॥

१४७१ या लोभाद् या परद्रोहाद् योऽपात्राद् यः स्वसार्थतः ।
प्रीतिर्लक्ष्मी[ः]पयः त्के(क्ले)शः सा किं सा किं स किं स किम् ॥

१४७२ योऽसौ निरञ्जनो देवश्चित्स्वरूपी जनार्दनः ।
स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः ॥

१४७३ एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वास्यते तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥

१४७४ एकेनापि सुवृक्षेण कोटरस्थितवह्निना ।
दह्यते तद्वनं सर्वं कुपुत्रेण क(कु)लं यथा ॥

१४७५ एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद् द्रव्यं दत्वा यदनृणीभवेत् ॥

१४७६ न विषं विषमित्याहु[र्]ब्रह्मस्वं विषमुच्यते ।
विश(ष)मेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥

१४७७ धनुर्वादेषु वित्ताशा मौ(मो)क्षाशा कौलिके मते ।
जामातरि च मी(मि)त्राशा त्रयमेतन्निरर्थकम् ॥

१४७८ संसारदावदग्धानां तृष्णासन्तप्तचेतसाम् ।
सुखाय सर्वसंन्यासः सन्तोषामृतनिर्झरम्(रः?) ॥

१४७९ काकः काञ्चनपञ्जरे विनिहितः पद्माकरे कौशिकः
श्राद्धे श्वा विनियोजितो हुतवहे हव्यः पलाण्डु[:]कृतः ।
सर्वं तेन कृतं किमत्र बहुना(व)द्यं [मनः?]शान्तये
येनाज्ञानवता महीयसी(सि) पदे धूर्तः समारोपितः ॥

१४८० द्वारे रुद्धमुपेक्षते कथमपि प्रत्यागतं नेक्षते
विज्ञप्तौ गजमीलितानि कुरुते स्वल्पेऽपराधे यमः ।
निर्यातस्य करोति दोषगणनां तद्विद्विषामग्रतः
स स्वामी यदि सेव्यते मरुतटे किं नः पिशाचैः कृतम् ॥

१४८१ आपाण्डुता शी(शी)रसी(सि) य(त्रि)वली कपोले
दन्तावली विगलिता न च मे विषादः ।
एणीदृशो युवतयः पथि मां विलोक्य
तातेति भाषणपराः स तु कुन्तघातः ॥

१४८२ यावद् [भवेद् ] भ्रमरविभ्रमकेशपाश-
स्तावन्नरो युवतिवल्लभतामुपैति ।

डिण्डीरपिण्डपरिपाण्डुरतुण्डमुण्डं
चण्डालवत्परिहरन्ति नरं तरुण्यः ॥

१४८३ स्निग्धो रवः सरसशाकविघारजन्मा
केषां न कार्पणयति श्रवणेन्द्रियाणि ।
यः सञ्चरद्रसवतीचरणारविन्द-
मञ्जीरसिञ्जि(ञ्जि)तचमत्कृतिमातनोति ॥

१४८४ कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप ।
ईदृशी किमवस्था ते सर्वत्र न भवादृशः ॥

—भोजकव्योरुक्तिप्रत्युक्ती

१४८५ इदमनुचितमक्रमश्च पुंसां
यदिह जरास्वपि मान्मथो विकारः ।
इदमपि न कृतं [नितं]बिनीनां
कुचपतनावधि जीवितं रतं वा ॥

—शीलाभट्टारिकाभां(याः?)

१४८६ वनानि दहतो वह्नेः सखा भवति मारुतः ।
स तदीय(वि)नाशाय कृशे कस्याति गो(गौ)रवम् ॥

१४८७ पदस्थितस्य पद्मस्य मित्रं सलिलभासु(स्क)रौ ।
पदच्युत[स्य] तस्यैव क्लेदक्लमकरावुभौ ॥

१४८८ पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण हि सुवृत्तानामस्थायिन्यो विपत्तयः ॥

१४८९ हस्तादपि न दातव्यं गृहान(द)पि न दीयते ।
परोपकरणार्थाय वचनेऽपि दरिद्रता? ॥

१४९० सौभाग्यं विरलस्य स्यात् समकर्मगुणेष्वपि ।
षड्विंशदायुधानां यत्स्वनायत्तो जयः स्मृतः ॥

१४९१ मासि मासि समा ज्योत्स्ना पक्षयोरुभयोरपि ।
तत्रैकः शुक्लपक्षोऽभूद् यशः पुण्यैरवाप्यते ॥

१४९२ स एव धन्यो विपदि स्वभावं यो न मुञ्चति ।
त्यजत्यर्ककरैस्तप्तं हिमं देहं? न शीतताम् ॥

१४९३ पतितोऽपि राहुवदने तरणिर्बोधयति पद्मखण्डानि ।
भवति विपद्यपि महतामङ्गीकृतवस्तुनिर्वाहः ॥

१४९४ अन्तः कटुरपि लघुरपि सद्वृत्तं यः पुमान् न संत्यजति ।
स भवति सद्यो वन्द्यः सर्षप इव सर्वलोकस्य ॥

१४९५ न तद् भ(भु)क्तं न [त]त्पीतं न तत्सुप्तं न तच्छ्रुतम् ।
यन्माषमाहिषक्षीरमृगाक्षीमानवर्जितम् ॥

१४९६ ददतो युद्ध्यमान[स्य] श्व(श्व)दतः पुलको न चेत् ।
आत्मनश्च परेषाञ्च धिग्दानं पौस(रु)षं वचः ॥

१४९७ कार्पण्येन यशः क्रुद्धा(धा) गुष्ठा(ण)चयो दम्भेन सत्यं क्षुधा
मर्यादा व्यसनैर्धनानि विपदा स्थैर्यं प्रमादैर्द्विजः ।
पैशुन्येन कुलं मदेन विनयो दुश्चेष्टया पौरुषं
दारिद्रे(द्र्ये)[ण] जनादरो ममतया स्वात्मप्रकाशो हतः ॥

१४९८ मूर्खोऽशान्तस्तपस्वी क्षितिपतिरलसो मत्स[री] धर्मशीलो
दुःस्थो मानी गृहस्थः प्रभुरतिकृपणः शास्त्रविद्धर्महीनः ।
प्रज्ञाहीनो नरेन्द्रः शुचिरपि सततः(ततं)यः परान्हो(न्नो)पजी[वी]
वृद्धो रोगी दरिद्रः स च युवतिपतिर्धिग्विंडम्बप्रकारान् ॥

१४९९ विद्वान् संसदि पाक्षिकः परवशो मो(मा)नी दरिद्रो गृही
द्रव्याढ्यः कृपणः सुखी परवशो वृद्धो न तीर्थाश्रितः ।
राजा दुःसचिवप्रियः कुलभवो मूर्खः पुमान् स्त्रीजो(जि)तो
वेदान्ती हतसत्क्रियः किम[प]रं हास्यास्पदं भूतले ॥

१५०० ख्यातिश्चेत् कपटेन किं किमरी(रि)भिः क्रोधोऽस्ति चेद् देहिनां
ज्ञातिश्चेदसे(न)[ले]न किं यदि सुहृद् दिव्यौषधैः किं फलम् ।
सर्पैः किं यदि दुर्जनाः कु(कि)मु धनै[र्]विद्याऽनवि(व)द्या यदि
व्रीडा चेत् किमु भूषणेन कविता यद्यस्ति राज्येन किम् ॥

१५०१ स्वर्ग(?)यदि स्फु(सद्)गुणा निजवधैः(?)किं वा बुभूषाविधि-
र्लावण्यं यदि किं सुधा वरकवेः शृङ्गारगर्भा गिरः ।
मृत्युः किं यदि [दुर्]गुणेष्वनुगतिः किं धिक् यदि प्रार्थना
प(पा)र्थैकनिकेतनो यदि भवा[न्]किं कल्पभूमीरुहः ॥

१५०२ नागो भाति मदेन कं जलरुहैः पूर्णेन्दुना शर्वरी
शीलेन प्रमदा जवेन तुरगो नित्योत्सवैर्मन्दिरम् ।
वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः
सत्पुत्रेण कुलं पुमान् वितरणैः सत्कारणैः सम्पदः ॥

१५०३ लोभश्चेदगुणेन किं प(पि)शुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं गुणैः सुमहिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरप[य]शो यद्यस्ति कि मृत्युना ॥

१५०४ वित्तेन किं वितरणं यदि ना[स्ति] दीने
किं सेवया यदि परोपकृतौ न यत्नः ।
किं सङ्गमेन तनयो यदि नेक्षणीयः
किं यौवनेन विरहो यदि वल्लभायाः ॥

१५०५ सूनुः सच्चरितः सखा सहचरः स्वामी प्रसादोन्मुखः
स्निग्धो बन्धुरवञ्चकः परिजनो निःक्लेशलेषं(शं) मनः ।
आहारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं
तुष्टे विष्टपकष्टहारिणी(णि) हरौ सम्पद्यते देहिनाम् ॥

१५०६ अविधेया भृत्यजनाः शठानि मित्राण्यवा(ना)यकः स्वामी ।
अविनयवती च भार्या मस्तकशूलानि चत्वारि ॥

१५०७ वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद् भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले-
ष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो जनेभ्यो नमः ॥

१५०८ ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपशां(सां) क्षमा प्रभव(वि)तुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥

१५०९ कोऽर्थान् प्राप्य न गर्वितो हि सकलाः कस्यापदोऽस्तङ्गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥

१५१० बन्धुः को नाम दुष्टानां कुप्येत्को नातियाचितः ।
को न तुष्यति वित्तेन कुकृत्ये को न पण्डितः ॥

१५११ धनेन किं यो न ददाति नाश्नुते
बलेन किं यश्च रिपुं न बाधते ।
श्रुतेन किं येन न धर्ममाचरेत्
किमात्मना यो न जितेन्द्रियो भवेत् ॥

१५१२ का विद्या कवितां विनाऽर्थिनि जने दानं विना श्रीश्च का
को धर्मः कृपया विना क्षितिपतिः को नाम नीतिं विना ।
कः सुनुर्विनयं विना कुलवधूः का स्वामिभक्तिं विना
भोग्यं कि रमणीं विना जनिजुषः किं जन्म कीर्तिं विना ॥

१५१३ मणिः शाणोल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना ।
कलाशेषश्चन्द्र[ः] सुरतमृदिता बलवनिता
तनिम्ना राजन्ते गलितविभवाश्चार्थिषु जनाः ॥

१५१४ शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥

१५१५ क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
काके शौचं द्यूतकारे च सत्यं
राजा मित्रं केन दृष्टं श्रुतं वा ॥

१५१६ किंशुकादपि गन्धाशा मांसाशा मशकादपि ।
कृपणादपि वित्ताशा त्रयमेतन्निरर्थकम् ॥

१५१७ स्वामिनि गुणान्तरज्ञे गुणवती(ति) भृत्येऽनुवर्तिनि कलत्रे ।
मित्रे चानुपचर्ये(?) निवेद्य दुःखं सुखी भवति ॥

१५१८ इन्दुं कैरविणीव कोकपटलीवाम्भोजिनीवल्लभं
मेघं चातकमण्डलीव मधुपश्रेणीव पुष्पाकरम् ।
माकन्दं पिकसुन्दरीव तरुणीवात्मेश्वरं प्रोषितं
चेतोवृत्तिरियं मम प्रियसखे त्वां द्रष्टुमुत्कण्ठते ॥

१५१९ अजायुद्धमृषिश्राद्धं प्रत्यूषे मेघडम्बरः ।
दम्पत्योः कलहश्चैव परिणामे न किञ्चन ॥

१५२० कुभोज्येन दिनं नष्टं कुकलत्रेण शर्वरी ।
कुपुत्रेण कुलं नष्टं तन्नष्टं यन्न दीयते ॥

१५२१ सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ।
तन्मित्रं यत्र विश्वासः सदेशो यत्र जीव्यते ॥

१५२२ तद् गृहं यत्र वसति तद् भोज्यं येन जीवति ।
यन्मुक्तये तदेवोक्तं ज्ञानमज्ञानमन्यथा ॥

१५२३ कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः ।
परिवर्तिनि संसारे मृतः को वा न जायते ॥

१५२४ किं चित्रं यदि वेदशास्त्रनिरतो विप्रो भवेत्पण्डितः
किं चित्रं यदि नीतिशास्त्रनिरतो राजा भवेद् धार्मिकः ।
तच्चित्रं यदि रूपयौवनवती साध्वी भवेत् कामिनी
तच्चित्रं यदि निर्धनो हि पुरुषः पापं न कुर्यात् क्वचित् ॥

१५२५ नाजारजः पितृद्वेषी नाजारा भर्तृवैरिणी ।
नालम्पटोऽधिकारी स्यान्नाकामि(मी) मण्डनप्रियः ॥

१५२६ गुणो भूषयते रूपं शीलं भूषयते कुलम् ।
सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम् ॥

१५२७ अग्निहोत्रफला वेदा शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥

१५२८ प्रीणाति यः सुचरितैः पितरं स पुत्रो
यद् भर्तुरेव हितमिच्छति तत्कलत्रम् ।

तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥

१५२९ स्त्रीणां यौवनमर्थिनामनुगमो राज्ञां प्रतापः सतां
सत्यं स्वल्पधनस्य संचितिरसद्वृत्तेस्तु वाग्डम्बरः।
स्वाचारस्य महाकुलं परिणतेर्विद्या कुलस्यैकता
प्रज्ञाया धनमुन्नते [र्]गुणचयः शान्तेर्विवेको बलम् ॥

१५३० न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम्।
धर्मो न वै यत्र च नास्ति सत्यं
सत्यं न तद् यच्छलनानुविद्धम् ॥

१५३१ धनाशा जीविताशा च गुर्वी प्राणभृतां सदा।
वृद्धस्य तरुणी भार्या प्राणेभ्योऽपि गरीयसी ॥

१५३२ स्वदेशजाते सुगुणाधिकेऽपि नरे तु लोकस्य [भ]वेदवज्ञा।
निजाङ्गनायामपि रूपराशिस्तथापि पुंसां परदारदृष्टिः ॥

१५३३ नास्ति सत्यं सदा चौरे न शौचं वृषलीपतौ।
मद्यपे सौहृदं नास्ति द्यूतयुक्ते न तत्त्रयम् ॥

१५३४ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः।
श्रुतहि(ही)नस्तथा विप्रस्त्रयस्ते नामधारकाः ॥

१५३५ वरं सखे सत्य(त्पु)रुषावमाननं
न नीचसङ्गोऽपि गुणैरलङ्कृतः।
पराश्वपादोपहतो विराजते
न रासभस्योपरि संस्थितो नरः ॥

१५३६ दूरस्थोऽपि समि(मी)पस्थो यो यस्य हृदि वर्तते ।
यो यस्य हृदये नास्ति समीपस्थोऽपि दूरतः ॥

१५३७ अशक्तश्च भवेत्साधुः कुरूपा च पतिव्रता ।
व्याधितो देवभक्तश्च निर्धनश्च जितेन्द्रियः ॥

१५३८ तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता ।
याव[ज]ज्वलति नाङ्गेषु स्वतः पञ्चेषुपावकः ॥

१५३९ इन्द्रो यमोऽसि वरुणोऽसि हुताशनोऽसि
ब्रह्मा हरो हरिरसिम(सी)त्यसकृद् यदुक्तम् ।
भूपालमौलिमणिरञ्जितपादपीठ
तस्यानृतस्य फलमिन्धनमुद्वहामि ॥

१५४० किं जन्मना जगति किं पितृपौरुषेण
शक्त्यैव याति निजया पुरुषः प्रतिष्ठाम् ।
शक्तो हि कूपमपि शोषयितुं न कुम्भः
कुम्भोद्भवेन मुनिनाम्बुधिरेष पीतः ॥

१५४१ त्यजेत्क्षुधार्ता महिला स्वपुत्रं
खादेत् क्षुधार्ता भुजगी स्वमण्डम् ।
बुभुक्षितः किं न करोति पापं
क्षीणा नरा निःकरुणा भवन्ति ॥

१५४२ निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति ।
अकारणद्वेषि मनस्तु यस्य
कथं जनास्तं परितोषयन्ति ॥

१५४३ नापगा मधुवाहिन्यो न नगा मांसराशयः ।
न स्त्रीमयं जगत्सर्वं मल्ली(ल्लि)नाथः कथं सुखी ॥

१५४४ आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः ।
बकाः खलु न बध्यन्ते मौनं सर्वार्थसाधनम् ॥

१५४५ विदुषां वदनाद् वाचः सहसा यान्ति नो बहिः ।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥

—पण्डितराजस्यायम्

१५४६ गीर्भिर्गुरूणां परुषाक्षराभि-
स्तिरस्कृता यान्ति नरा महत्त्वम् ।
अजातशाणोत्कषणा नृपाणां
न जातु मौलौ मणयो वसन्ति ॥

१५४७ वहति विषधरान् पटीरजन्मा शिरसि मषीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥

१५४८ वंशभवो गुणवानपि संगविशेषेण पूज्यते पुरुषः ।
न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥

१५४९ किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः
किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः ।
किं मित्रं सततोपकाररसिकं तत्वावबोधः सखे
कः शत्रुर्वद खेददानकुशलो दुर्वासनासञ्चयः ॥

*अथ शृङ्गाररसाख्यानम्*

१५५० चतुर्विधः स चाप्युक्तः समान्या(!)विप्रलम्भकः ।
संयोगो षिश्चकेति(?) रसिकानां सुखाप्तये ॥

*तत्राद्यं कामप्रशंसा*

१५५१ प्र(प्रा)सादीयति वैणवाद(दि)गहनं दीपीयति द्राङ्नभः
पर्यङ्कीयति भूतलं दृशि(ष)दपि श्लक्ष्णोपधानीयति ।

कस्तूरीयति कर्द्दमः किमपरं यूनो रसाविष्टयो-
र्येनालोकितयोः स वन्द्यमहिमा देवो नमस्यः स्मरः ॥

१५५२ ग्रीवा शङ्खति किञ्च चक्रति कुचो बाहू बिशत्यासद(?)
आस्यं पद्मति लोचनं शफरति भ्रू[र्]मत्तममैदति(?)।
केशः शैवलति स्वयं कुलवधूः शृङ्गारकासारति
प्रेयो(या)न्हंसति यस्य संस्तुतिविधौ जीयात् स देवः स्मरः ॥

—भवदेवस्य

१५५३ येनाकारि प्रसभमचिरादर्द्धनारीश्वरत्वं
दग्धेनापि त्रिपुर[ज]यिनो ज्योतिषा चाक्षुषेण ।
इन्दोर्मित्रं स जयति मुदां धाम वामप्रसारो
देवः श्रीमान् भवरसभुजां दैवतं चित्तजन्मा ॥

—रतिहर(रह)स्यकृतः

१५५४ अपूर्वेयं धनुर्विद्या मदनस्य महात्मनः ।
शरीरमक्षतं कृत्वा भिनत्त्यन्तर्गतं मनः ॥

१५५५ एकं वस्तु द्विधा कर्तुं बहवः सन्ति धन्विनः ।
मार एको महाधन्वी द्वयमेकं करोत्यसौ ॥

*नरप्रशंसा लेख्या(?) । नारीप्रशंसा*

१५५६ श्रुतं यस्यालोकाद् विरहिजनशोकापनयनं
यदङ्के सानन्दं नय[न]मरविन्दं विहरति ।
न यस्यापैति श्रीः कचनिजपराहोऽपि पुरः(?)
स ते खेदं रामावदनहिमधामा शमयतु ॥

१५५७ यासां सत्यपि सद्गुणानुसरणे दोषानुरागे भ(भृ)शं
याः प्राणान् वरमर्पयन्ति न पुनः संपूर्णदृष्टिं प्रिये ।

अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मकस्
तत्तत्केलिषु दक्षिणा अपि सदा वामा जयन्त्येव ताः ॥

१५५८ शुभं दृष्टं स्पृष्टं स्मृतमपि निद्रां(सदा?)ह्लादजननं
न रत्नं स्त्रीभ्योऽन्यत् क्वचिदपि कृतं लोकपतिना(?) ।
यदर्थं धर्मार्थं विभववरसौख्यानि च न(य?)तो
गृहे लक्ष्म्यो मान्याः सततमबला मानविभवैः ॥

—केषामप्येते

१५५९ भवन्तो वेदान्तप्रणिहितधियामत्र गुरवो
विचित्रालापानां वयमपि कवि(वी)नामनुचराः ।
इदं सत्यं ब्रूमो न हि पु(प)रहितात्पुण्यमपरं
न चास्मिन् संसारे कुवलयदृशो रम्य[म]धिकम् ॥

—भर्तृ०

१५६० वचसि भवति सङ्गत्यागमुद्दिश्य वार्ता
स्मृतिमुखरमुखानां केवलं पण्डितानाम् ।
जघनमरुणरत्नग्रन्थिकाञ्चि(ञ्ची)कलापं
कुवलयनयनानां को विहातुं समर्थः ॥

१५६१ एताश्चलद्वलयझङ्कृतिम(मे)खलोत्थ-
संरावनूपुररवाहृतराजहंसाः ।
कुर्वन्ति कस्य न मनो विवशं तरुण्यो(?)
वित्रस्तमुग्धहरि[णी]सदृशाक्षिपातैः ॥

१५६२ द्रष्टव्येषु किमुत्तमं मृगदृशां प्रेमप्रसन्नं मुखं
घ्रातव्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः ।
किं स्वाद्येषु तदोष्ठपल्लवरसः स्पृश्येषु किं तद्वपु-
र्धे(र्ध्ये)यं किं नवयौवने सहृदयोः(यैः) सर्वत्र तद्विभ्रमाः ॥

१५६३ स्वपरप्रतारकोऽसौ
निन्दति योऽलि(ली)कपण्डितो युवतीः ।
यस्मात्तपसो(?)पि फलं
स्वर्गः स्वर्गेऽपि चाप्सरसः ॥

१५६४ स्त्रीमुद्रां कुसुमायुधस्य परमां सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः ।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥
—भर्तृहरेः

१५६५ जये धरित्र्याः पुरमेव सारं
पुरे गृहं सद्मनि चैकदेशः ।
तत्रापि शय्या शयने वरस्त्री
रत्नोज्ज्वला राज्यसुखस्य सारः ॥

१५६६ अमृतस्येव कुण्डानि रत्नानामिव जातयः ।
रतेरिव(?)निधाना[नि] निर्मिताः केन योषितः ॥

१५६७ यन्निःपीड्य विरज्येत स्यन्दितैषा मधुश्रुतिः ।
मन्ये तत्क्षौद्रपटलं त्यक्तं तेनेन्दुमण्डलम् ॥

१५६८ अधरामृतेन पित्तं नश्यति वायुः पयोधरस्पर्शात् ।
अविरतसुरतेन कफस्त्रिदोषशमनं वपुः स्त्रीणाम् ॥

१५६९ अकृत्रिमप्रेमरसा विलासालसगामिनी ।
असारे दग्धसंसारे सारं सारङ्गलोचना ॥

—केषामप्येते

१५७० नामापि स्त्रीति संह्लादि विकरोत्येव मानसम्।
किं पुनर्दर्शनं तस्या विलासोल्लासितभ्रमः॥

—कामन्दकस्य

१५७१ प्रभवति मनसि विवेको विदुषामपि शास्त्रसम्भवस्तावत्।
निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम्॥

*अथ पृथगवयव[व]र्णनम्। तत्र वेणी*

१५७२ जानीमस्त[व] केशपाशरचनाश्यामायमाण(नः) करः
क्वापि [क्वापि] चकोरचारुनयने यत्प्रोछि(ञ्छि)चेतोभुवा।
तो(ते)नाजायत षट्पदस्य पटली पाथोमुचः कन्दली
ध्वान्तस्य प्रकरः कलापिनिकरः शैवालजालाङ्कुरः॥

१५७३ न जीमूतक्षोदः स हि गगनचारी न च तमो
न तस्येन्दौ मैत्री न च मधुली(लि)हस्तेऽपि मुखराः।
न पिच्छं तत्केकिन्युचितमसितो वा न च मणि[र्]
मृदुत्वादाः दा(ज्ञा)तं घनचिकुरपाशो मृगदृशः॥

१५७४ उन्मीलद्वदनेन्दुकान्तिविसरैर्दूरे समुत्सारितं
लग्नं पीनकुचस्थले शशिरुचा हारेण हा निर्जितम्।
एतस्याः किल[के]क(कि)कण्ठकदलीकल्पं मिलत्कौतुका-
दग्रे प्राप्तसुखं रुषेव सहसा केशेषु लग्नं तमः॥

—केषामप्येते

१५७५ कस्तूरीतिलकं बाले भाले मा कुरु मा कुरु।
अद्य साम्यं भजामी[ति] जृम्भते शशलाञ्छनः॥

—कयोः

१५७६ बाले ललामलेखेयं भाले भल्ली [वि]राजते।
भ्रूलताचापमाकृष्य न विद्मः कं हनिष्यति॥

—कस्यापि

१५७७ तस्या मृगमदविन्दुर्जनयति शोभां भ्रुवोरन्तः ।
का(को)दण्डमुष्टिलग्नं फलमिव कामस्य बाणस्य ॥

—रामचन्द्रभट्टस्य

भ्रुवौ

१५७८ यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यत्र त एव शासनधरः सत्यं सदासां स्मरः ॥

१५७९ तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या ।
यां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥

—श्रीकालिदासस्य

१५८० भ्रूवल्लिरस्या हृदयालयस्य द्वारायमाणो नयनद्वयेऽस्मिन् ।
कस्यापि धन्यस्य नवप्रवेशे नन्दत्यसौ वन्दनमालिकेव ॥

—अमरस्य

१५८१ भ्रूलेखायुगलं भाति तस्याश्चटुलचक्षुषः ।
पत्रद्वयीव हरिता नासावंशविनिर्गता ॥

—बिल्हणस्य

१५८२ चलति गलितधैर्यः को न मोक्षान्तरा[ला]-
द्बहलगवलनीला यत्पुरो वक्रिताङ्गा ।
इयमुपशमरूपं मार्गमाखण्डयन्ती
प्रचलति कुटिलाद्या भ्रूलता सर्पिणीव ॥

कटाक्षः

१५८३ सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जा तावद् विधत्ते विनयमपि समालम्बते तावदेव ।

भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥

१५८४ शिलासम्यग्धौतौ(तो)ज्ज्वलधवलधारापरिसरा-
निमानन्त[:]श्यामानिव विषमबाणस्य विशिखान्।
हठप्रह्वावर्माण्यपि हृदयमर्माणि रुजतः
कटाक्षानेणाक्ष्या मुनिरपि न सोढुं प्रभवति ॥

१५८५ यत्र यत्र वलते नतभ्रुवः सुभ्रुवो नयनकोणविभ्रमः ।
तत्र तत्र शतपत्रधोरणी तोरणीभवति पुष्पधन्वनः ॥

—केषाम्

१५८६ प्रभवति मनसि विवेको
विदुषामपि शास्त्रसम्भवस्तावत्।
निपतन्ति दृष्टिपाता
यावन्नेन्दीवराक्षीणाम् ॥

—कृष्णभट्टस्य

१५८७ नूनम(मा)ज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः।
यतस्तन्नेत्रसञ्चारसूचितेषुः प्रवर्तते ॥

*नेत्रे*

१५८८ उत्तंसितं भाति मुखप्रभाभि-
स्तत् किञ्चिदब्जं यदहो तदस्याः।
युक्तं दृशावेव विधिर्विधिज्ञः
कर्णद्वयालङ्करणं चकार ॥

—अमरस्य

१५८९ दृशं तव दृढव्रतां सकललोकसम्मोहने
कथं कमललोचने कथय वर्णयामो वयम् ।

यया किल पराजिता(तो) निमिषमात्रगव्यूतिग-
श्चलाचलधुरन्धरो भुवनरञ्जनः खञ्जनः ॥

—हरिकवेर्ममायम्

१५९० श्रुतिलङ्घकृतप्रयत्नयोर्मलिनाभ्यन्तरयोरधीरयोः ।
स्मृतिलोपकरत्वमेतयोरुचितं लोच[न]योर्मृगीदृशः ॥

१५९१ न युक्त(क्तं) स्वच्छमध्या[नां] बहुश्रुतिविलङ्घनम् ।
इत्यवेद्य स्थिते तस्याः श्रुति(तीं) संश्रित्य लोचने ॥

—कयोः

१५९२ सुन्दसी(रि) तव दृक्तुलनामारोढुं विकसितं सरोजेन ।
विधिना तदैव दत्तं परागमिषतो मुखेऽस्य रजः ॥

—कविरत्नस्य

*नासा*

१५९३ कपोलयोन्दुरिं(रिन्दु)जितोरमुष्याः
प्रसर्पतोरेव मिथो जयाय ।
स्वयं स्वयम्भूः कृतरोधमन्त-
र्व्यधत्त नासामिह साम्यदण्डम् ॥

—अमरस्य

१५९४ पुराणबाणत्यागाय नूतनास्त्रकुतूहलात् ।
तन्नासा भाति कामेन तूणेवां(वा)धोमुखीकृता ॥

—बिल्हणस्य

*नासामौक्तिकम्*

१५९५ ललाटे लोलाक्ष्यास्तिल[क]मिषधारी विधुरयं
स्वमापूर्णं वाञ्छ्य(?)[म]धरसुधया देवहितकृत् ।

अतो नासाग्रे तौ तदुपहतये मौक्तिकमिषा[त्]
स्फुटं दैत्यामात्योऽधरशशभृतोरन्तरगतः ॥

१५९६ सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन ।
अनङ्गसञ्जीव[न]दृष्टशक्तेर्मुखामृतं ते पिबति(ती)व चन्द्रः ॥

१५९७ अधरद्युतिशोणितं मृगाक्ष्या
नवनासापुटमौक्तिकं विभाति ।
सह निःश्वसितेन रिक्तमध्यात्
मदनाग्नेरिव निःसृतः स्फुलिङ्गः ॥

१५९८ अयि मुक्ताफलमबले किमधरबिम्बेन विद्रुमं कुरुषे ।
पृष्ठ्या(?)गुंजाबीजं शिव शिव हसितेन मौक्तिकं भूयः ॥

१५९९ पुण्डरीकमिवाभाति नासावंशस्य मौक्तिकम् ।
कुचसिंहासनस्थस्य स्मरभूपस्य सुभ्रुवः ॥

*कर्णौ*

१६०० [किं] माहग्हे(गे?)णद्वयबन्धनाय
पाशद्वयं कर्णमिषादमुष्याः ।
दृग्दम्भ्रंभमगे(?)यसेव्यं
सज्जीकृतं मन्मथयौवनाभ्याम् ॥

—कस्य

१६०१ सौन्दर्यपात्रे वक्त्रेन्दौ कुरङ्गासङ्गभीतया ।
सूचितौ श्रोत्रपाशाभ्यां पाशाविव मृगीदृशा ॥

*कर्णभूषणम्*

१६०२ दधानस्ताटङ्कच्छलमिह मृगाङ्कस्तव मुख-
श्रिये युष्मत्सेवामनुदिवसमेवारचयति ।

समीक्ष्य त्वच्चक्षुःश्रियमथ तदीयाङ्कहरिणो
व्यपेतस्तन्मध्यात्कमलमुखी(खि) शून्योऽयमभवत् ॥

१६०३ यत्पूर्वं पवनाग्निशस्त्रसलिलैश्चीर्णं तपो दुश्चरं
तस्यैतत्फलमीदृशं परिणतं यज्जातरूपं वपुः ।
मुग्धायाः सुकपोलचुम्बनसुखं सङ्गश्च रत्नोत्तमैः(?)
प्राप्तं(प्तुं) कुण्डल वाञ्छसे किम[धि]रं(कं) यन्मूढ दोलायसे ॥

१६०४ ताटङ्कमस्यास्तरलेक्षणाया मुक्ताफलैश्चारुरुचं विधत्ते ।
मुखश्रिया चन्द्रमिवाभिभूय बन्दीकृतं तारकचक्रवालम् ॥

—केषाम्

१६०५ ताटीदलं काञ्चनकर्णपाशे
प्रसारयन्ती सुतनुः कराभ्याम् ।
रराज कर्णान्तनिषण्णदृष्टिः
शाणे दधाने[व] कटाक्षबाणान् ॥

—बिल्हणस्य

१६०६ वेत्रत्वचा तुल्यरुचां वधूनां
कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन्
कोऽवेदयिष्यन्नवचम्पकानि ॥

*कपोलौ*

१६०७ आबध्न[त्] परिवेषमण्डलमलं वक्त्रेन्दुबिम्बाद् बहिः
कुर्वच्चम्पकजृम्भमाणकलिकाकर्णावतंसक्रियाम् ।
तन्वङ्ग्यः परिनृत्यतीव हसतीवोत्सर्पतीवोल्वणं
लावण्यं ललतीव काञ्चनशिलाकान्ते कपोलस्थले ॥

—त्रिविक्रमभट्टस्य

दन्ताः

१६०८ द्विधा विधाय शीतांशुं कपोलौ कृतवान् विधिः ।
तन्व्यास्तद्रसनिःस्यन्दबिन्दवो रदनाः स्फुटम् ॥

—कपोलकवेः

१६०९ रामावदनपद्मान्तर्दन्तमाला वयःकृता ।
मनोजमन्दिरं मत्वा दीपमालेव राजते ॥

—हरिकवेर्मम

१६१० रसवदमृतं कः सन्देहो मधूनि मधून्यथो
मधुरमधिकं द्राक्षायाश्च प्रसन्नतरं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत् स्वादु स्यात्प्रियादशनच्छदात् ॥

१६११ कामं करीषाग्निमधो निधाय
भ्रमेण तापाशियं भजध्वम् ।
युष्माकमध्यावधि नाधिकारो
दुग्धानि मुग्धाधरमाधि(धु)रीषु ॥

१६१२ द्विजसङ्गतिमासाद्य सर्वो रागाद् विमुच्यते ।
रक्तस्तथापि तन्वङ्ग्या बिम्बोष्ठः केन हेतुना ? ॥

१६१३ बन्धूकद्युतिबन्धु प्राक्[त]माधुर्यनिर्जितद्राक्षम् ।
तन्वि तवाधरबिम्बं हिमकरबिम्बे प्रवालमद्राक्षम् ॥

१६१४ तवैष विद्रुमच्छायो मरुमार्ग इवाधरः ।
करोति कस्य नो बाले पिपासाकुलितं मनः ॥

**क्षतम्**

१६१५ अपि मृगाक्षि तवाधरपल्लवे दयितदन्तपदं न भवत्यदः ।
भुवनमोहनमन्त्रपदाङ्कितं किमुत यन्त्रमिदं स्मरमन्त्रिणः ॥

१६१६ क्वचिदपि [पात्र?]विशेषे दोषोऽपि गुणेन तुल्यतामेति ।
खण्डनमेव हि मण्डनमधरदले भवति रमणीनाम् ॥

१६१७ सर्वस्यैव हि रत्नस्य व्रणेऽर्घः परिहीयते ।
दयिताधररत्नं तु व्रणितं यात्यनर्घताम् ॥

**स्मितम्**

१६१८ पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा यदि विद्रुमस्थम् ।
ततोऽनुकुर्याद् विष(श)दस्य तस्या-
स्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥

—श्रीकालि०

१६१९ मुखेन्दुपीतेन्दुयशःप्रवाहः
प्रस्तुत्वरोद्गारनिभा(भो) विभाति ।
अस्याः स्मितश्रीरसनाग्रदोला-
विलोलवाणी वसनान्तकान्ता ॥

१६२० अस्या विभाति स्मितरत्नपूरैश्लिष्टोऽधरः पाटलतापटीयान् ।
अन्तर्मनोभूरसदुग्धसिन्धुरी(वी)चीमुखप्रेङ्खितविद्रु(?)मानः ॥

—अमरस्य

१६२१ धवलीकरोति हरी(रि)तो
मलिनीकुरुते मुखं सपत्नीनाम् ।
तस्या हास्या(स)विलासो
मम तु मनो रक्तमाचरति ॥

१६२२ नूनं चन्द्रमसं(सः) कुक्षावस्ति कस्तूरिकामृगः ।
अन्यथा कथमेतस्याः श्वासाः सौरभशालिनः ॥

*वाक्*

१६२३ कपोलो(लौ) लोलाद्या मधुमुकुललीलाविजयिनो(नौ)
पु(उ)रोजौ रेजाते कनककलशाभोगसुभगौ ।
दृशौ वातान्दोलत्तरलतरनीलोत्पलरुचौ
वचो नो जानीमः किममृतमयं किं विषमयम् ॥

१६२४ द्राक्षा तु रूक्षैव सुधा मुधै[व]
साध्वी न माध्वी विरसो रसालः ।
आस्वादकानां भवदीयवाचां
वीणाध्वनौ विप्रतिपत्तिरासीत् ॥

*मुखम्*

१६२५ कोशः स्फीततरः स्थितानि परितः पत्राणि दुर्गं जलं
मैत्रं मण्डलमञ्च(मुज्ज्व)लं चिरमधो नीतास्तथा कण्टकाः ।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदत्यद्भुतं
यत्पद्मेन जि[गी]षुणाऽपि न जितं मुग्धे त्वदीयं मुखम् ॥
—विज्जायाः

१६२६ यदमरशतैः सिन्धोरन्तः कथञ्चिदुपार्जितः(तं)
सकलमपि तद् धात्रा कान्तामुखे विनिवेशितम् ।
सुरसुमनसः श्वासामोदे शशी च कपोलयो-
रमृतमधरे तिर्यग्भूते विषं च विलोचने ॥

१६२७ अनाकाशे चन्द्रः सरसिजदलद्वन्द्वसहितो
गृही[तः] पूर्वार्द्धे कुटिलकुटिलैः सोऽपि तिमिरैः ।

सुधां मुञ्चत्युच्चैरनिशमथ सम्मोहजननीं
किमुत्पातालीयं वदत जगतः कर्तुमुदिता ॥

१६२८ अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः
कलङ्केनास्पृष्टो न खलु परिभूतो दिनकृता ।
कुहु(हू)भिर्नो लब्धो न च युवतिवक्त्रेण तुलितः
कलानाथः का(को)ऽयं कनकलतिकायामुदयते ॥

१६२९ जनानन्दश्चन्द्रो भवति न कथं नाम सुकृती
प्रयातोऽवस्थाभिः[ति]स्त्रभिरपि कोटि(टी)भिरियतीम् ।
भ्रुवोर्लीलां बालः श्रियमलिकपट(ट्ट)स्य तरुणो
मुखेन्दोः सर्वस्वं हरति हरिणाक्ष्याः परिणतः ॥

१६३० वक्त्रं जेष्यामि चन्द्रः प्रतिदिवसमसौ कान्तिमभ्येति गुर्वीं
नेत्रच्छायां हरिष्याम्यहमिति विकसत्युत्पलं दीर्घिकायाम् ।
कुर्वाणे ते तथापि श्री(श्रि)यमधिकतरां वीक्ष्य लोलेक्ष[णा]यां
वैलक्ष्यात्क्षीण एको विघटितमपरं मघरे(?) नास्ति भद्रम् ॥

१६३१ इदं चित्रं तावद् यद्द(द)य(व)नितले पार्वणशशी
कलङ्कान्निर्मुक्तः किमपि [च] तदन्तर्विलसति ।
प्रवालं माणिक्यं कुवलययुगं मन्मथधनु-
र्मनोरम्या वाणी ध्वनिरपि महच्चित्रमपरम् ॥

—केषाम्

१६३२ विना सायं कोऽयं समुदयति सौरभ्यसुभगः
किरन् ज्योत्स्नाधारामधिधरणि तारापरिवृढः ।
धनुर्धत्ते स्मारं रच(तिर ?)यति विहारं न तमसां
निरातङ्कः पङ्केरुहयुगलमङ्के नटयति ॥

—भानुकरः

१६३३ विभ्राणो मृगलक्ष्ममेव किमपि प्रौढं तपस्तप्यता-
माराध्नोतु निरन्तरं दिविषदः पीयूषसत्रेण च ।
देहार्द्धेन पुनः करोतु यदि वा भूतेश्वरस्यार्चनं
तद्वक्त्रेण समस्तथापि भविता शङ्के न शीतद्युतिः ॥

—गोत्रानन्दस्य

१६३४ वदन्त्येके मूर्खास्तव वदनचन्द्रस्य शशिनं
परे चाहुर्धात्रा तव वदनमालोक्य घटितम् ।
वयं ब्रूमः कान्ते दरमुकुलिताम्भोजनयने
तवास्यप्रच्छाया दिवि भवति राकाहिमकरः ॥

—डिंडिमस्य

१६३५ आरब्धे दयितामुखप्रतिसमे निर्मातुमस्मिन्नपि
व्यक्तं जन्मसमानमेव मिलितामंशुच्छटां वर्षति ।
आत्मद्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः
सङ्कोचादुपरि स्थित[स्य]न विधेर्यच्छिल्पमुन्मीलितम् ॥

—श्रीमुरारेः

१६३६ धिक् तस्य मन्दमनसः कुकवेः कवित्वं
यः स्त्रीमुखं च शशिनं च समीकरोति ।
भ्रूभङ्गविभ्रमकटाक्षनिरीक्षितानि
कोपप्रसादहसितानि कुतः शशाङ्के ॥

—धनदस्य

१६३७ मैकं तमस्तबकमूर्द्ध्न(?)मपाकृथास्त्व-
मैणं त्वजास्य(?)नयने विपुले गृहाण ।
लोलालकं तरलवीक्षितमायताक्ष्याः
साक्षान्मुखं यदि भवाननुहर्तुकामः ॥

१६३८ एकतोऽभ्युदितमिन्दुमण्डलं स्मेरमास्यमसितभ्रुवोऽन्यतः ।
चञ्चुकोरकपुटीं चकोरिका चालयत्युभयतोऽपि धावति ॥

—हरिहरस्य

१६३९ तस्या मुखस्यातिमनोहरस्य
कर्तुं न शक्तः सदृशं प्रियायाः ।
अद्यापि शीतद्युतिरात्मबिम्बं
निर्माय निर्माय पुनर्भनक्ति ॥

१६४० अनेन रम्भोरु तवाननेन पीयूषभानोस्तुलनां धृतस्य ।
ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः ॥

१६४१ अत्यल्पौषधिप्रपन्न(?)स्तदपि कलानायको न सम्पन्नः ।
काञ्चनलतावलम्बी काञ्चन पुष्णाति कान्तिमयमिन्दुः ॥

—केषाम्

१६४२ तस्या वदनचन्द्रस्य कान्तिरन्यैव जायते ।
कलङ्कतुलनां यत्र धत्ते नासा समौक्तिकम् ॥

—भानु०

१६४३ अल्पेनापि सुरक्तेन साधनेन प्रयोजनम् ।
ओष्ठद्वयसहायेन कान्तास्येन जगज्जितम् ॥

**कण्ठः**

१६४४ कण्ठस्तस्याः कुवलयदृशः काञ्चनः कोऽपि कम्बु-
र्लावण्याम्बुस्मरनरपतेरर्घ्यमाविःकरोति ।
तिस्रो रेखास्त्रिभुवनजयव्यञ्जिकास्तत्र तत्किं
न स्यान्मध्ये त्रिवलिरचनापौनरुक्त्याय धातुः ॥

—कस्य

१६४५ मुदं ददाति त्रिजगज्जयाय प्रयाणशङ्खो मकरध्वजस्य ।
कण्ठोऽयमस्या मृदुमध्यतारस्वरत्रयाधार इति त्रिरेखः ॥

—अम०

१६४६ कण्ठस्य विदधे कान्तिं मुक्ताभरणता यथा ।
नास्याः स्वभावरम्यस्य मुक्ताभरणता तथा ॥

**बाहू**

१६४७ सरले अपि दोर्लेखे चित्रं चञ्चलचक्षुषः ।
अमुग्धाभ्यो मृणालीभ्यः कथमाजह्रतुः श्रियम् ॥

—कस्य

१६४८ शब्दवद्भिरलङ्कारैरुपेतमतिकोमलम् ।
सुवृत्तं काव्यवद् रेजे तद्बाहुलतिकाद्वयम् ॥

—शकवृद्धेः

१६४९ दयिताबाहुपाशस्य कुतोऽयमपरो विधिः ।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥

—भासस्य

**करौ**

१६५० मुग्धे प्रसारयसि किं कुसुमानि हर्तु-
मेतावशोकविटपस्य कुतूहलेन ।
अस्यैव तन्वि नवपल्लवडम्बरेषु
त्वं हारयिष्यसि निजौ स्वयमेव पाणी ॥

***अङ्गुलयः***

१६५१ अङ्गुलीषु दधुरङ्गुलीयकं सुभ्रुवः प्रविततप्रभाजलम् ।
आलवालमिव पुष्पधन्वि(न्व)ना बालविद्रुमलतासु निर्मितम् ॥

१६५२ सुदीर्घा रागशालिन्यः सर्वपर्वमनोहराः ।
तस्य(स्या)विरेजुरङ्गुल्यः कामिनां सङ्कथा इव ॥

—शकवृ०

स्तनौ

१६५३ पुष्पेशो(षो)रभिषेकहेमकलशौ हारप्रभावाहिनी(नौ?)
चक्राह्वौ मदजोन्मदद्विपपतेः कुम्भौ रतेः कन्दुकौ ।
कन्दौ बाहुमृणालिकायुगलयोर्लीलालतासत्फ[ले]
नव्यौ रत्नसमुद्गकौ वहति सा लावण्यपूर्णौ स्तनौ ॥

१६५४ शुकीचञ्चू[त्]खातच्छवि फलयुगं यौवनतरो-
रयःशङ्कुक्षुण्णं मदनकरिणः कुम्भयुगलम् ।
समुद्गं भोगायामृतकलशयुग्मं सुकृतिनः
कुचद्वन्द्वं तन्व्या नवनखपदाङ्कं विजयते ॥

१६५५ उद्भिन्नं किमिदं मनोभवनृपक्रीडारविन्दद्वयं
तत्सूतिः कथमेकतः परिलसद्रोमावलीनालतः ।
चक्रद्वन्द्वमिदं पुरस्तदपि किं स्थातुं मुखेन्दोः क्षमं
लावण्याम्बुधिमग्नयौवनगजस्तस्यैव कुम्भद्वयम् ॥

१६५६ कुचावस्याः कामद्विपकलभकुम्भाव(वि)ति परे
वदन्त्यन्ये वक्षःसरसि कमले काञ्चनघटौ ।
अयं मे सिद्धान्तः स्फुरति मदनेन त्रिजगतीं
विनिर्जित्य न्युब्जीकृतमिव युगं दुन्दुभियुगम् ॥

१६५७ आकाङ्क्षाऽपि तथा यथा न विरताकाङ्क्षोऽपि लब्धान्वयो(?)
या सा काचन काञ्चनाचलतिल(र)स्कारिण्यसौ योग्यता ।
आसाभिश्च(?) तथा यथा न बिसिनी(?)सूत्रान्तरं लभ्यते
का शाब्दी परिपाटिरञ्चति कुचद्वन्द्वे कुरङ्गीदृशः ॥

१६५८ स्मरस्वं सर्वस्वं कुचकलशयोः पङ्कजदृशो
धृत्वं(?) धृत्वा मुद्राकृत''मुखयोर्नीलिममिषात् ।
न चेदिच्छं(त्थं?) व्यर्थं कथय कथमेतौ स्मरबली
स्मरं तं पश्यन्तं प्रहरति शरैरेष विषमैः ॥

१६५९ अस्माकं बत मण्डले प्रथमतः पत्या करः पात्यते
काञ्चीकुन्तलमध्यदेशविषयान् सन्त्यज्य भूरिश्रियः ।
इत्यालोच्य पयोधरौ मृगदृशां जातौ निलीला(ना)ननौ
नो नीचोऽपि पराभवं विषहते किं तादृशावुन्नतौ ॥

१६६० अमृतोन्मिलतैः सुवर्णचूर्णैर्मृदमुत्पाद्य निधाय नाभिचक्रे ।
अकरोन्नवरोमराजियष्ट्या कुचकुम्भौ कुसुमेषुकुम्भकारः ॥

—केषाम्

१६६१ पङ्कोद्भवत्वपरिवादभयान्मृगाक्ष्या
जातं सरोजमुकुलं कुचवेशधारि ।
शक्यं न धातृविहितं परिमार्ष्टुमस्य
भूयोऽपि येन घ[न]चन्दनपङ्कयोगः ॥

—उत्प्रेक्षावल्लभस्य

१६६२ अस्याः स्मितप्रणयिपूर्णमुखेन्दुबिम्ब-
निर्गच्छदच्छदशनांशुसुधां निधातुम् ।
पीनस्तनद्वयमिषात्तपनीयकुम्भौ
लोभादधः प्रगुणिताविव पद्मजेन ॥

—नाचिराजस्य

१६६३ नायं शशी तत्प्रतिरूपमन्य-
द्यस्मान्न विश्लेष[य]ति द्वयं [नौ] ।

इति स्म तर्कादिव पश्यतस्तौ
तस्या मुखे[दु'] कुचचक्रवाकौ ॥

—कुमारदासस्य

१६६४ शिशिरनिशि सुधासुवर्णकुम्भा
यदि शिशिरेतरतां समावहेयुः ।
सरसिजदलदीर्घलोचनानां
कुचयुगलेन धृतोपमा भवेयुः ॥

१६६५ मनोरमं सर्वमनोरमेषु कुचद्वयं चञ्चललोचनायाः ।
इतीव दृग्दोषनिवारणार्थं श्च(च)क्रे विधिश्चूचक...(?) ॥

१६६६ अयमङ्कुरभाव एव तावत् कुचयोः कर्षति लोकलोचनानि ।
इतरेतरपीडिनीमवस्थां गतयो······रतयोः कथं भवित्री ॥

१६६७ कनकक्रमुकायितं पुरस्तादथ पङ्केरुहकोरकायमाणम् ।
अनु तालफलायमानमास्ते सुदृशो वक्षसि कस्य भागधेयम् ॥

१६६८ दूरीकृतबदरद्युतिरुररीकृतपक्वदाडिमे(मो)द्रेका ।
अलसीकृतघटभङ्गी जयति कुरङ्गीदृशः प्रभा कुचयोः ॥

१६६९ विल्वफलप्रतिमल्लं न्यग्भावितपक्वदाडिमस्थौल्यम् ।
अलसीकृतकलसीकं कुचयुगमस्या नमस्यामः ॥

१६७० जाता लता हि शैले जातु लतायां न जायते शैलः ।
अधुना तद्विपरीतं कनकलतायां गिरिद्वयं ज.तम् ॥

१६७१ यथा यथा विशत्यस्या हृदये हृदयेश्वरः ।
तथा तथा बहिर्यातः शङ्के सङ्कोचतः कुचौ ॥

१६७२ स्वकीयं हृदयं भित्वा निग(र्ग)तौ यौ पयोधरौ ।
अतः परस्य हृदयोद्भेदने का कृपा तयोः ॥

१६७३ किं वर्ण्यते कुचद्वन्द्वमस्याश्चटुलश्च(च)क्षुषः ।
आसमुद्रकरग्राही भवान् यस्य करप्रदः ॥

१६७४ यन्न माति तनौ तन्व्या लावण्यमतिसम्भृतम् ।
पिण्डीकृतमुरोदेशे तत्पयोधरतां गतम् ॥

१६७५ मृद्वङ्गि कठिनौ तन्वि पीनौ सुमुखि दुर्मुखौ ।
अत एव वहिर्यातौ हृदयात्ते पयोधरौ ॥

—केषाम्

१६७६ निखिलैर्निरस्तमङ्गैरङ्गीकृत्यापि भाविपरिमर्दम् ।
शरणागतमि[व] रक्षति काठिन्यं कुचयुगं तस्याः ॥

—मालतीमाधवस्य

१६७७ कृतचन्दनाङ्गरागो मदनसखः श्रीफलद्वेषी ।
सुन्दरि सुवर्णवर्णो वक्षोजः कीदृशो रुद्रः ॥

—कविरत्नस्य

हारः

१६७८ नायं हारस्य मध्ये तरलमरकतो नाभिदेशे कृशाङ्ग्या
नैषा भाति त्रियामारमणशुचिरुचिः पद्धतिर्मौक्तिकानाम् ।
नाभीलावण्यवाप्यामयमसमशरस्त्र्यक्षकोपाग्निदग्धो
मग्नस्तस्यापि कम्पा(?)पतनसमुदिता शीकरश्रेणिरेखा ॥

१६७९ प्रतीमः पञ्चेषुप्रमदकरिणः पङ्कजदृशो
महानिम्ने नाभीसरसि जलकेलिं कलयतः ।
ध्रुवं रोमश्रेणीकरकुहरविक्ष(क्षि)प्तपयसो
द्विधाकारा धारा विरचयति हंसावलिरुचिम् ॥

१६८० उत्तं(त्तुं)गस्तनमण्डलादवतरद्गङ्गेव हारावली
रोमालीनवनालनीलदरुचिः सेयं कलिन्दात्मजा ।
जातं तीर्थमिदं सुपुण्यजनकं यत्र(त्रा)वयोः सङ्गम-
श्चन्द्रो मज्जति लाञ्छनं ''हृदये नूनं नखाङ्कच्छलात् ॥

१६८१ एकावलीकलितमौक्तिककैतवेन
तन्व्याः समुन्नतपयोधरयुग्मसेवाम् ।
चक्रुर्मनांसि यमिनामतिनिर्मलानि
कन्दर्पमुक्तशरपातकृतान्तराणि ॥

१६८२ सौन्दर्यस्य मनोभवेन गणनालेखा किमेषा कृता
लावण्यस्य विलोकितुं त्रिजगतामेषा किमु श्रीचिका ।
आनन्दप्रम(द)मञ्जरी नयनयोः किं वा समुज्जृम्भते
मुग्धायाः किमु वा स्वभावसुभगा रोमालिरुन्मीलति ॥

१६८३ किमेषा रोमाली किमलिलतिका कामनृपते-
रयं किं वक्षोजक्षितिरुहसमारोहणगुणः ।
इयं भृङ्गश्रेणी कुचकमलमालेद्गुमुदिता
यवा(दा) वेणीछाया कमलनयनाया विजयते ॥

—डिण्डिमस्य

१६८४ यूनां धैर्यतृणाङ्कुरं कवल[य]न् पीडाम्बुपूरं पिब[न्]
शृङ्गारो हरि[ण]स्तवस्तनगिरेः सीमानमारोहति ।
नाभे का वनवस्पतिः(?)स्र(श्रि)तवती कस्तूरी(रि)काश्यामिका
रा(रो)मालीति महार्घ्यतां वितनुते कल्याणी(णि) जानीमहे ॥

१६८५ अकस्मात् पञ्चेषोः किल तरुणि तारुण्यललिते
गभीरे ते नाभि(भी)सरसि कृतझम्पो ध्वजझषः ।
तुमुद्धर्तुं धीरः कुचतटनिश(ष)ण्णः स यतते
क्षिपन्मन्दं मन्दं बडिशमिह रोमाली(लि)कपटात् ॥

१६८६ अमुष्मिन् लावण्यामृतसरसि [नूनं] मृगदृशः
स्मरः सर्वप्लुष्टः पृथुजघनभागे निपतितः ।
तदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरा-
च्छिखा धूमस्येयं परिणमति रोमावलिमिषात् ॥

—रामचन्द्रस्य

१६८७ गम्भीरनाभीह्रदसन्निधाने रराज नीला नवरोमराजिः ।
मुखेन्दुभीतस्तनचक्रवाकचञ्चुच्युता शैवलवल्लरीव ॥

—लक्ष्मीधरस्य

१६८८ मध्येन सङ्कटतमेन विलासवापीं
नाभीं प्रति [प्र]चलतः कुचकेली(लि)शैलात् ।
चेतोभुवः समवलम्बनरज्जु(ज्जु)केवः(तुः)
तस्याः परिस्फुटमराजत रोमराजिः ।

१६८९ दैवादमुष्मिन् किल कामनंत्रे(?)
नैवानुमानं विरुणद्धि बद्धः ।
रोमालिधूमादनुमीयतेऽस्या
नाभीह्रदे कामहुताशसत्त्वम् ॥

१६९० दत्तं मया पदमिदं नवयौवनाय
त्वं सत्वरं क्वचन शैशव ! साधयेति ।
कामस्वहस्तलिखिताक्षरमालिकेव
रोमावली विजयते जलजेक्षणायाः ॥

१६९१ नाभि(भी)बिलादुच्चलिता भुजङ्गी
रोमालिरास्येन्दुसुधां लिलिक्षुः ।
विलोक्य केशावलिबर्हिभारा-
दुरोजगिर्योः समलीयतान्तः ॥

१६९२ अमलकुलकलङ्कत्रासमन्त्रेण रुद्धा
मधुरतरमहेला नेत्रहेलाभुजङ्गी ।
विकचकुचयुगान्तर्वर्त्मना नाभिरन्ध्रं
प्रविशति किमु मन्ये रोमराजीमिषेण ॥

—केषाम्

१६९३ उपद्रुताया नवयौवनेन
यान्त्या गलत्साञ्ज[न]बाष्पपूरम् ।
बाल्यश्रियः किं पदवी विरेजे
रोमावली खञ्जनलोचनायाः ॥

—रामच०

१६९४ किं रोमराजीयमुनातटेऽस्या वलित्रिदण्डीं कलयन्ननङ्गः ।
कस्यापि रूपेण जितस्तपस्वी तमेव जेतुं तनुते तपांसि ॥

—अमरस्य

१६९५ वक्षोजकपटधूर्जटिगलगलिता गरललेख(खे)यम् ।
मूर्च्छयति वीक्षणादपि किं न कुरङ्गाक्षी(क्षि) रोमाली ॥

१६९६ सदसच्छं(त्सं)शयबुद्धिं मध्यस्तनुते तथापि रोमाली ।
श्यामा विभाति सत्ये वेणी दृग्गोचरैवेयम् ॥

१६९७ गरुअं थणाण भारं दिठ्ठूणं किसभणं यजस्स(?) ।
भंजणभयेण विहिणा दिणी(ण्णो) रोमावलीखंभो ॥

वलिः

१६९८ तत्त्रिविष्टपमाख्यातं तन्वङ्ग्या यद् वलित्रयम् ।
येनानिमिषदृष्टित्वं तस्यामस्यु(स्यो?)पजायते ॥

—विशाखदेवस्य

१६९९ दरिद्रमुदरं दृष्ट्वा चक्रे लावण्यपूर्णयो[ः] ।
पन्थानं स्तनयौ(यो)स्तस्यास्त्रिवलीषविमं विधिः ॥

—विल्हणस्य

१७०० एकमेव बलिं बद्ध्वा जगाम हरिरुन्नतिम् ।
तन्व्यास्त्रिवलिबन्धेऽपि सैव मध्यस्य नम्रता ॥

*मध्यः*

१७०१ मुग्धाक्षीकुचभारधारणवलोन्नीतस्य चेतोगति-
व्यक्ताणुव्यतिरेकिणोऽपि परमा एकर्द्धस्य (?)मध्यस्य तु ।
युक्तं कारणभूयतः स्फुटमदः कार्यत्वविज्ञानतो
वेदान्तोदितनित्यतादिविरहं मन्ये पराणोरपि ॥

१७०२ सन्नद्धोऽयं नवतरुणी(णि)मा काममास्कन्दकामो
नैनां मुञ्चत्यह[ह] सहसा दुर्ग्रही बालभावः ।
यद्वैराज्य(जं) वरतनु तनुस्वर्णभूमौ प्रवृत्तं
प्रायस्तस्मादनुदिनमयं क्षीयते मध्यदेशः ॥

—कयोः

१७०३ वयःप्रकर्षादुपचीयमान-
स्तनद्वयस्योद्वहनश्रमेण ।
अत्यन्तकार्श्यं वनजायण(ता?)क्षा(द्या)
मध्यो जगामेति ममे(मै)ष तर्क्कः ॥

—क(कु)मारदासस्य

१७०४ काञ्चीगुणैर्विरचिता जघने[षु]लक्ष्मी[र्]
लब्धाः स्थितिः स्तनतटेषु च रत्नहारैः ।
नो भूषिता वयमितीव नी(नि)तम्बिनीनां
कार्श्यं निरर्गलमधार्यत मध्यभागैः ॥

—रत्नाकरस्य

१७०५ हसत्सु दैत्येषु विधिः किमस्याः
सर्गे दधौ मुष्टिबलेन मध्यम्।
ततो नितम्बस्तनवृद्धिहेतु-
श्च्युतोत्थितद्रव्यमिदं कृशीयः॥

—अमरस्य

१७०६ मध्योऽपि तस्या विजी(जि)तः कृशाङ्ग्याः
पञ्चाननः काननबद्धवासः ।
तस्याः स्तनद्वन्द्वतरी(टी)धियैव
कुम्भीन्द्रकुम्भी कुपितो भिनत्ति ॥

—अरसीठकुरस्य

१७०७ अस्मिन् प्रकृतिमनोज्ञे लग्ना प्रायेण मान्मथी दृष्टिः।
सुन्दरी(रि) यतो भवत्याः प्रतिक्षणं क्षीयते मध्यः॥

—कविरत्नस्य

१७०८ निर्णेतुं शक्यमस्तीति मध्यं तस्या नतभ्रुवः।
अन्यथानुपपत्त्यैवापयोधरभरस्थितेः ॥

*नाभिः*

१७०९ मन्ये समाप्ते लावण्ये सारगर्भे मृगीदृशं(शः)।
अपूरयित्वेव गतो नाभीरन्ध्रं प्रजापतिः॥

—बिल्ह०

१७१० विधायाङ्गानि तन्व्यं(न्वं)ग्या मन्ये मध्यस्य सूक्ष्मताम्।
बोधयन् विदधे बिन्दुं नाभीरं[ध्रं] चतुर्मुखः॥

*नितम्बः*

१७११ अमृतमधुरैः काञ्चि(ञ्ची)नादैः कृताभयदिं(डि)ण्डिमे
त्रिवलिलहरीलावण्याम्भः कणे(?) कर्बुरे ।

विषयमनयज्वालाजालावलीढपराक्रमो
लुठति मदनस्तन्वङ्गीनां नितम्बरालाट(धरात)ले ॥

—सोमेश्वरभट्टस्य

१७१२ नितम्बद्वन्द्वं ते रसदरुणमाणिक्यरसना-
रसालं वामोरुद्वयललितमाभाति यदी(दि)दम् ।
तदेतत्(द्) घण्टालं रतिरमणसं(रु)ढस्य करिणो
महाशुण्डादण्डद्वयललितकुम्भस्थलमये ॥

—डिण्डिमकवेः

१७१३ जी(जि)गीषया हेमगिरेर्विवृद्धो
यः प्राग्य(प) नीचत्वमृषे[र्]नियोगात् ।
स विन्ध्यभूभृत्तरुणीनितम्ब-
व्याजेन भेजे पुनरुन्नतत्वम् ॥

—रामजित्पण्डितानाम्

१७१४ विधातुमेनां ख[लु] सज्जयित्वा
लावण्यलेयं(खां) प्रचुरं विरञ्चिः ।
नितम्बबिम्बे कृशचारुमूर्ति-
निर्माणशेष्यं(सेवां) न्यदधादशेषम् ॥

—अमरस्य

१७१५ स कथं न स्पृहणीयो विश(श्व)रतेस्तन्नितम्बविन्यासः ।
शान्तात्मनाऽपि विहितं विश्वस(सृ)जा गौरवं यत्र ॥

जघनम्

१७१६ वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशो
ललितललितैरङ्गन्यासैः पुरा रभसादिव ।

तदनु सहसा खिन्नेनेव प्रजापति[ना] भृशं
पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली ॥

—जघनस्थलीघटकस्य

१७१७ मुक्तेरपि प्रियतेमा(तमो) जघनोपभोयः(गः)
प्रेयान्न मृग्यमिह वस्तुनी(नि) नः प्रमाणम् ।
यत्पश्यतायतदृशो रशनाकलापे
मुक्ता अपि स्वयमहो पुनरेव बद्धाः ॥

—उत्प्रेक्षावल्लभस्य

१७१८ आनीलचूचकशिलीमुखमुन्नतैक-
रोमावलीवलयनालमिदं प्रियायाः ।
उत्तं(उत्तु)ङ्गसङ्गतपयोधर···युग्मं
नाभेरधः कथयतीव महानिधानम् ॥

१७१९ कुचशैलसन्निधाने त्रिवलिनदीतीरकोटरे तन्व्याः ।
जगदपि नग्नी(?)विहितं पश्यत पञ्चेषुचौरेण ॥

१७२० तद्दृयाः पद्मपलाशाद्यास्तन्व्यास्तज्जघनं घनम् ।
दृष्टं सखीर्याभिस्ता पुन्भावं मनसा ययुः ॥

—श्रीवाल्मि(ल्मी)केः

ऊरू

१७२१ दृष्टौ हतं मन्मथबाणपातैः शक्यं विधातुं न निमील्य चक्षुः ।
ऊरू विधात्रा नु कृतौ कथांतावित्यास तस्यां सुमतेर्वितर्कः ॥

—कुमारदासस्य

१७२२ लीलागतिश्चात्र निसर्गसिद्धा
न म(श?)क्रदंती मुषितो न हंसः ।

इति(ती)व जङ्घायुगलं तदीयं
व(च)क्रे तुलाकोट्यधिरोहणीति ॥

—कस्य

१७२३ जंघे तदयि(दीये) सन्तापं यज्जनस्यानुरागिणः।
जनयाञ्चक्रतुस्तीव्रं तत्र हेतुर्विलोमता ॥

—शकवृद्धेः

१७२४ जङ्घाद्वयं यौवनकामदेवचलज्जयस्तम्भयुगं जगत्याम् ।
अस्या विभात्युन्मुखसम्मुखीननखप्रतिच्छन्दयशःप्रशस्तिः ॥

—अमरस्य

चरणौ

१७२५ अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं हि किम् ।
इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥

१७२६ जाग्रतः कमला[ल्]लक्ष्मीं यज्जग्राह तदद्भुतम् ।
पादद्वयस्य मत्तेभगतिस्तेये तु का स्तुतिः ॥

—बिल्हणस्य

नखाः

१७२७ तद्वक्त्रं नेत्रपद्मप्रकटितमसकृत्स्पर्द्धितिं(?)यन्मयैत-
ज्जातं तस्मात्कृशत्वं ग्रहणमपि ततो जायमानः कलङ्कः ।
तत्सर्वं क्षम्यतां मे पुनरपि न करोम्येवमुक्त्वा तु तस्या
गाढं लग्नः शशाङ्कश्चरणनखमणिच्छद्मना पादयुग्मम् ॥

—कस्य

१७२८ सेवानताभिर्दशदिक्पतीनां कांभिरंम(?)द्युतिनिर्जिताभिः ।
अस्याः पदद्वन्द्वमपूजि चूडारत्नैर्नखश्रेणिमिषेण मन्ये ॥

—अमरस्य

१७२९ तस्याः पदनखश्रेणी शोभते चपलभ्रुवः ।
रत्नावलीव लावण्यरत्नाकरसमुद्भवा ॥

—बिल्ह०

गतिः

१७३० विनिर्जिता(तोऽ)स्या गतिविभ्रमेण
रोषादिवाताम्रमुखो मरालः ।
दुःखादिवैभः शितिरेत-
त्क्रम(?)भ्रमान्मर्दयतेऽम्बुजानि ॥

—अमरस्य

१७३१ अध्यापनपरिपाटी नूनमपूर्वा मृगीदृशामेषा ।
चरणैरेवादिदिशुर्गतिकौशल्यं मरालस्य ॥

१७३२ मारयन्त्या जनं सर्वं निरागसमवज्ञया ।
मातङ्गानां मतिर्यादृक् तादृगासीदसंशयम् ॥

*अथ समग्रस्त्रीस्वरूपवर्णनम्*

१७३३ तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा
तच्चक्षुर्यदि हारितं कुवलयैश्चेत्तद्गिरो धिङ् मधु ।
धिक् कन्दर्पधनु[र्] भ्रुवौ यदि च ते किं वा बहु ब्रूमहे
यत्सत्यं पुनर(रु)क्तवस्तुविमुखः सर्गक्रमो वेधसः ॥

—श्रीराजशे०

१७३४ सौरभ्यं मृगलाञ्छने यदि भवेदिन्दीवरे वक्रता
माधुर्यं यदि विद्रुमे तरलता कन्दर्पचापे यदि ।
रम्भायां यदि विप्रति(ती)पगमनं प्राप्तोपमानं तदा
तद्वक्त्रं च तदीक्षणं तदधरस्तद्भ्रूस्तदूरुयुगम् ॥

१७३५ कुहू राकां सूतेऽरुणकिरणमध्यार्दितनुः
सुधासिन्धुं सन्ध्या दरदलितमध्या ग्रहरुचा ।
नवो विद्युत्प्रो(पो)तो लसति रविरस्याः शुकमुखा-
दये केयं वेला त्रिपुरजयिजेतुर्जयकरी ॥

१७३६ उभौ रम्भास्तम्भावुपरि विपरीतौ कमलयो-
स्तदूर्ध्वं रत्नानां स्थलमथ दुरूहं किमनि(पि) तत् ।
ततः कुम्भौ पश्चाद् बिसकिशलये कन्दलमथो
तदन्वीदा(?)विन्दीवरमधुकराः किम्पुनरिदम् ॥

१७३७ शोपद्येनाभः(?)पुलिनं(न)युगमेतन्न तटिनी
खमेतन्न व्याप्तिः स्तबकयुगमेतन्न लतिका ।
प्रवालोऽयं नाब्धिः श(शि)शिरकिरणोऽयं न रजनी
घनोऽयं न प्रावृड् शिव शिव विधेः शिल्परचना ॥

—केषाम्

१७३८ तमःस्ता(स्तो)मः पूर्वं तदनु सकलः पार्वणशशी
तकः(तः) कोकद्वन्द्वं तदनु च न किञ्चित्पुनरभूत् ।
अनम्भस्यावर्त्तस्तदनु कदलीकाण्डयुगलं
ततोऽवांचौ(?)पद्मौ किमिदमतिचित्रैव रचना ॥

—देवबोधेः

१७३९ विनैवाम्भोवाहं बहलरुचिदीप्तांम्बरतला-
त्तडिल्लेखा हेमद्युतिविततिरम्या विलसति ।

विनैव स्वर्गङ्गां नभसि रभसव्यग्रशफरी
परीवर्तैः सार्द्धं स्फुरति विकचेन्दीवरवनम् ॥

—श्रीजयदेवस्य

१७४० तद्वक्त्रस्य कलङ्क एक(व)तुलना पिपू(?)धाम्नाऽपि यत्
कन्दर्पस्य धनुर्निदर्शनमिदं निन्दास्पदं तद्भ्रुवोः ।
सा तल्लोचनयोस्त्रपा कुवलयैः साधर्म्यचिन्ताऽपि या
तस्यास्तत्प्रतिबिम्बमेव नियतं वार्ता विसंवादिनी ॥

—गोत्रानन्दस्य

१७४१ लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्ताज्वरो निर्मितः ।
एषाऽपि स्वयमेव तुल्यरमणाभावाद् वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥

१७४२ आस्यप्रोज्झितपार्वणेन्दुयशसं नेत्रावधूतोत्पल-
श्रीगर्वां दशनच्छदव्यवहिताशोकप्रवालस्तुतिः(तिम्) ।
एनां दृष्टिसुधाप्रपां त्रिजगतः शिल्पी विधाय स्वयं
मन्ये हर्षवशादनायत(?)निजस्तोत्रप्रबन्धे कविः ॥

१७४३ निर्माल्यं नयनश्रियः कुवलं(लयं) वक्त्रस्य दासः शशी
भ्रूयुग्मस्य सनाभि मन्मथधनुर्ज्योत्स्नास्मितस्याञ्चलः ।
सङ्गीतस्य च मत्तकोकिलरुतान्युच्छिष्टम(मे)णीदृशः
सर्वाङ्गि(ङ्गी)णमहो विधिः परिणतं विज्ञानचित्रं चिरात् ॥

—केषाम्

१७४४ वक्त्रं निर्मलमुन्नता कुचतटी मध्यप्रदेशः कृशः
श्रोणीमण्डलमङ्गनाकुलगुरोर्देवस्य सिंहासनम् ।
कृत्वा चारुदृशश्चतुष्टयमिदं तुष्टाव मन्ये विधि-
र्हर्षाद्गद्गदगद्यपद्यरचनारम्यैश्चतुर्भिर्मुखैः ॥

—बिल्हण०

१७४५ वैश्रम्यं श्रुतिपङ्कजातप्रकटयत्यादन्दा[न्द]नीरं दृशोः
स्वर्णालङ्करणाद् व्यनक्ति पुलको वैधर्म्यमङ्गश्रियः ।
तस्मानुरूप(?) पद्मरागमहसः पादारविन्दश्रियो
भेदं शिञ्जितमेव वक्ति किमितः शिल्पं विधेर्वर्ण्यताम् ॥

—भानुकरस्य

१७४६ किमिन्दुः खं पद्मं किमु मुकुरबिम्बं किमु मुखं
किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ ॥
खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ
तडिद्वा तारा वा कनकलतिका वा किमबला ॥

—कस्य

१७४७ अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं
रतिरपि रतिः कामः कामो मधूनि मधून्यपि ।
इति न भजते वस्तु प्रायः परस्परसङ्करं
तदी(दि)यमबला लक्ष्मीं धत्ते कुतः सकलात्मिकाम् ॥

—राजपुत्रविजयप्य(पा)लस्य

१७४८ लोलाढ्या गगनान्तरालमखिलं राजीवराजीयुतं
राकाराजजसुव(?) जिष्णुः कचानां चयः ।
वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली
वाचां हारि च मार्दवं युवतिषु स्व(स्वा)भाविकं मण्डनम् ॥

१७४९ केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने
चान्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ।
मुक्तानां सतताधिवासरुचिरं वक्षोजशैलद्वयं
कान्तागात्रमिति प्रशान्तमपि कं रागं करोत्येव नः ॥

—भर्तृ०

१७५० अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तद्युतिः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।

वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥

—कालिदा०

१७५१ किं कौमुदी शशिकला सकला विचूर्ण्य(र्ये?)
संयोज्य चामृतरसेन पुनः प्रयत्नात् ।
कामस्य घोरहरहुङ्कृतिदग्धमूर्तेः
सञ्जीवनौषधिरियं विहिता विधात्रा ॥

—कस्य

१७५२ द्युसम्भवेस्या(?) भुवि भोगिनीनां
न स्यादिति श्रीर्विषदग्धभासाम् ।
दृष्टैर्व(?)सृष्टिः सुरसुन्दरीणां
तुरीयमास्तभारा नु जगत्कुतोऽसौ(?) ॥

—अमरस्य

१७५३ कमल[मृदु?]शरीरं भानुकतानुक्रमाल्लब्धं
क्रान्ता सौदामिनीकम् (?) ।
किसलयितमृणालं हारगर्भप्रवालं
कुवलयितशशाङ्कं कौशलं सा विधातुः ॥

—सूक्तिसहस्रात्

१७५४ लावण्यसिन्धुरपरो(रै)व हि केय[म]त्र
यत्रोत्पलानि शशिना सह सम्प्लवन्ते ।
उन्मज्जति द्विरदकुम्भघटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥

—विक्रमादित्यस्य

१७५५ प[षै?]व काचन विनिद्रसरोरुहाक्षी
कामस्य कापि दयिता तनुजाऽनुजा वा ।

यः पश्यति क्षणमिमां कथमन्यथाऽसौ
कामस्तमस्तकरुणं तरुणं निहन्ति ॥

१७५६ घुणाक्षरन्यायतया विधात्रा
विनिर्मितेयं मृगशावकाक्षी ।
जाने पुनः कौशलमेतदीय-
मेतादृशीं यद्यपरां विधत्ते ॥

—कयोः

१७५७ भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि
बाणा गुणः श्रवणपालिरिति स्मरेण ।
तस्यामनङ्गजयजङ्गमदेवताया-
मस्त्राणि निर्जितजगन्ति किमर्पितानि ॥

—गीतगोविन्दतः

१७५८ यतो यतोऽङ्गादपयाति कञ्चुक-
स्ततस्ततः स्वर्णमरीचिवीचयः ।
यतो यतोऽस्या निपतन्ति दृष्टय-
स्ततस्ततः श्यामसरोजवृष्टयः ॥

—चाटेश्वरस्य

१७५९ चञ्चरीकचयचक्रचकोरीचन्द्रबिम्बनवबिम्बफलानि ।
पश्य कस्य चिरचीर्णतपस्यावैभवेन तडिता मिलितानि ॥

१७६० नेत्ररथचक्रमित्रं रूपाहारध्वजं सुवदनायाः ।
वीक्ष्य पदाम्बुव(?)गात्रं हरिहरमदनाः कथं न विवदन्ते ॥

१७६१ कः कौ के कं कौ कान्
हसति च हसतो हसन्ति हरिणाक्ष्याः ।
अधरः पल्लवमङ्घ्री
पद्मे कुमुदस्य कोरकान् दन्ताः ॥

१७६२ गुरुणा स्तनभारेण मुखचत्रे(न्द्रे)ण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥

१७६३ मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ।
पादाभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥

—भर्तृ०

१७६४ अमन्दानन्दनिःस्यन्दसदास्तान्यक्रियाक्रमम् ।
जगद् विलोचनेनास्याः पीतामृतमिवाभवत् ॥

*बाल्यवर्णनम्*

१७६५ सुधायाः सध्रीची न च वचनवि(वी)ची विजयते
कुचश्रीः कर्कन्धूफलमपि न बन्धूकतवर्णी(ती) ।
न शीलं दृग्भङ्गी कलयति कुरङ्गीनयनयो(यो)-
स्तथापि श्रीरस्या युवजननमस्या विजयते ॥

१७६६ अनङ्कुरम(मु)रःस्थलं वचसि नोद्गता चातुरी
विकारि न विलोचनं भ्रुवि न वक्रिमोपक्रमः ।
तथापि हरिणीदृशो वपुषि कापि कान्तिछु(च्छ)टा
पटावन(वृत)महामणिद्युतिरिवान्तरालच्यते ॥

१७६७ एकद्वैर्दिवसे मनान्दोरंदतुरं(?)
द्वित्रैरेव दिनैश्च लोचनपथं रोमावलि[र्]यास्यति ।
किञ्चाभूदिव वासरैस्त्रिचतुरैश्चाञ्चल्यमस्या दृशो-
स्तज्जेतुं जगतीमनगे(नंग)किमर्ता(तो?) वायासमालम्बसे ॥

१७६८ धूलि(ली)केलीविरति-
र्यद्यपिनाद्यापि जायते सुनाना(तनोः) ।
तदपि स्मितपरिपाटी
मनसिजधाटीमिवादिशति ॥

*वयःसिं(सं)न्धिवर्णनम्*

१७६९ न केलिः कौमारी न च हृदि मनोभूर्निविशते
स्थिरा वा लोला वा न च न पुन(युव?)रीतिर्विजयते ।
न तादृक् नान्यादृक् परिणमति वक्षस्तदुभयं
शिशुत्वं तारुण्यं समगतमिह द्वारि मनसः ॥

—वाणीविलासस्य

१७७० पाञ्चालीमिथुनेषु नातिरसिका लोला विभूषाविभौ(धौ?)
सोत्कण्ठा कलगीतिषु प्रियतमालापेशु(षु) लज्जालसा ।
स्मारं स्मारमहर्निशं प्रियसखीसम्भोगवार्तां पुनः
संदिष्टा मदनेन तत्त्वविदुषा बाला चिरं लीयते ॥

—आकाशपालेः

१७७१ नास्ये हास्यलवः सुधामा(म)धु[म]रीमा(?)दोलायितो वर्तते
वक्षो नोच्छ्वसितं गतागतपरिश्रान्ताः सुमाराः(?) श्रियः ।
को वा वेद बहिर्भविष्यति कदापाङ्गादनङ्गातुरो
विश्वं तु स्मृतिजन्मना जितमिति व्यक्तः पुरे दि(डि)ण्डिमः ॥

—कस्य

१७७२ अनाकूतैरेव प्रियसहचरीणां शिशुतया
वचोभिः पाञ्चालीमिथुनमधुना सङ्गमयितुम् ।
उपादत्ते नो वा विरमति न वा केवलमियं
कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति ॥

—मुरारेः

१७७३ मन्दं मन्दं श्रवणपुटकोपान्तगं तादृगन्तः
किञ्चित् किञ्चिद् विरमति मनो धूलिकेलि(ली)रसेभ्यः ।
आविर्भावः स्तनमुकुलयोः काऽपि कान्तिः समन्ता-
दद्य श्वो वा कुसुमधनुषो यौवराज्याभिषेकः ॥

१७७४ शैशवं तरुणिमा च भूभुजौ
चापलं मधुरी(रि)मा च मन्त्रिणौ ।
सङ्गरे वपुषि पश्य सुभ्रुवः
सांनान जायनोन भंगिनौ(?) ॥

—वाणी०

१७७५ केलीगृहे वरतनौ शिशुतानताङ्गी
प्राणेश्वरस्तरुणी(णि)मा च परस्परेण ।
आलिङ्ग्य गाढमि[त]रेतरलीनदेह(?)
कस्यापि नैकतरनिश्चयमादधाते ॥

—रघुनाथोपाध्यायस्य

१७७६ इयं सृष्टा काचित् कनकलतिका पङ्कजभुवा
निषिक्ता लावण्यामृतरसभरेणानुदिवसम् ।
अकस्माद्रोमाली मधुपपटलीह स्फुरति यत्
ततः शङ्के पुष्पोद्गमसमयमायातमधुना ॥

१७७७ आगामिमदनपातर(?)मन्वेषयितुमभिषेकमेतस्याम् ।
निभृतं [न]यनपुरोधाः श्रुतिमनुसर्तुं समार(रे)भे ॥

१७७८ अचलं चलदिव चक्षुः प्रकृतमतीतं समुद्यदिय[व] वक्षः ।
अतदिव तदपि शरीरं सम्प्रति वामभ्रुवो जयति ॥

*अथ यौवनम्*

१७७९ लीलाताण्डवितभ्रु चारु वदनं किञ्चित्प्रगल्भे दृशौ
स्तोकोद्भेदनिवेदितस्तनमुरो मध्यं दरिद्राति च ।
अस्या यज्जघनं घनञ्च कलया प्रत्यङ्गम[मे]णीदृशः
सत्यङ्कार इव स्मरैकसुहृदाता(तो)द्यो यनेहार्पितः (?) ॥

१७८० वक्षस्यावरणादरश्चपलतात्यागोद्यमोऽप्यङ्गुली-
मुद्रासूचितहास्यमास्यमलयाः प श्चाली[लि]काकेलयः।
तिर्यग्लोचनवल्गित.नि वचसां छेकोक्तिसङ्क्रान्तय-
स्तस्याः सीदति शैशवे समभवत् कोऽप्ययेप नव्यक्रमः॥

१७८१ कलितगरिमा श्रोणिर्मध्यं निबद्धवलित्रयं
हृदयमुदय[ल्]लज्जं मज्जच्चिरन्तनचापलम्।
मुकुलितकुचं वक्षश्चक्षुर्मनाग्धृतवं[व]क्रिमं(म)
क्रमपरिगलद्बाल्यं तन्व्या वपुः श्रयते श्रियम्॥

१७८२ लब्ध्वा मण्डलमुन्नतं कुचयुगं स्फीता जघन्यश्रिय-
स्ता[:]क्रान्ता बलिभिश्च मध्यमभुवो दृग्भ्यां धृतो वक्रिमा।
पञ्चेषुर्विज[जि]गीषते त्रिजगतीं तद्बाल्यतारुण्ययो-
र्द्वं(?) राज्ये म(स)मुपस्थिते मृगदृशः किं क(के)न नारभ्यते॥

—केषाम्

१७८३ कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति मपि यत्।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्॥

—त्रिविक्रमभट्टस्य

१७८४ लास्याभांसु(भ्यास)भरेण चित्रमनया गात्रार्पणं शिक्षितं
लीलापञ्चमदोलनेन दलिता कण्ठस्य कुण्ठा गतिः।
किं वा वर्णनया समस्तललनालङ्कारताम(मे)ष्यति
स्वल्पेनैव परिश्रमेण रमणी देवस्य रामागुरोः॥

—बिल्ह०

१७८५ मारिद्यूतकल्प(?)कुकू(तू)हलि मनः छेकोक्तिशिक्षारति
हृद्यं दर्पणपाणिना स्वकबरीबन्धेन वाचार्यकम्।

प्रौढस्त्रीचरितानुवृत्तिषु रसो बाल्येषु लज्जा मनाक्
स्तोकारोहिणि यौवने मृगदृशः कोऽप्येष केलिक्रमः ॥

—राजशे०

१७८६ गतं कर्णाभ्यर्णं प्रसरति तथाऽप्यक्षियुगलौ(ले)
कुचौ कुम्भाकारौ तदपि चिबुकोत्तुंभज(?)रुची।
नितम्बप्राग्भारो गुरुरपि गुरुत्वं मृगयते
कथञ्चिन्नो तृप्तिस्तरुणिमनि मन्ये मृगदृशः ॥

—रुद्रस्य

१७८७ ऊरुद्वन्द्वमनिन्दितिं(तं) प्रथयता श्रोणीं समातन्वता
रोमालीं सृजता समागमयता नाभीं गभीरश्रियम्।
मध्यं क्षामयता स्तनौ घनयता कान्त्या मुखं लिम्पता
तन्वङ्ग्या नवयौवनेन किमपि प्रत्यङ्गमुन्मीलितम् ॥

१७८८ भ्रूभङ्गि(ङ्गी)कुटिला स्तने च गि(ग)रिमा दृष्टि[र्]गतिर्मन्थरा
विश्रब्धं हसितं कपोलपुलक(कं) वैदग्ध्यवक्रं वचः।
नौ(नो)द्दिष्टं गुरुणा न बन्धुकथितं दृष्टं न शास्त्रे क्वचिद्
बालायाः स्वयमेव यौवनकलापाण्डित्यमुन्मीलति ॥

१७८९ भ्रुवौ तावद् वक्रे समदचपलं लोचनयुगं
नितम्बोऽयं मुग्धः परिपतितरागोऽधरपुटः।
परी(रि)क्षीणो मध्यः कचवलयमुद्दाममलिनं
ततः सीमावैरं कुचसुभटयो[र्]निर्णयतु कः ॥

१७९० उरो मात्रोत्सेधं भवदपि विलासैरभिनवै-
र्म(मृ)गाक्ष्यास्तारि(रु)ण्यं त्रिभुवनमिदं व्याकुलयति।
स्तनाभोगः स्फीतं(तो) यदि किल भवेत् का खलु(?) कथा
भवित्री किञ्चान्यद् विज(जि)तमखिलं पुष्पधनुषा ॥

१७९१ एतस्यां रि(र)तिवल्लभक्षितिपतेः क्रीडासरस्यां शनैः
संक्षोवं(भं) नयतीव शैशवजलं तारुण्यतिग्मद्युतिः ।
अन्तःस्था च यथा यथा विलसति प्रायः कुचोच्चस्थली
लौल्यं हन्त तथा तथा वितनुते दृक्पीनमीनावलिः ॥

१७९२ पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्यां
श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यदेशः ।
धत्ते वक्षः कुचसचिवतामद्वितीयत्वमास्यं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥

१७९३ क्षोभं धत्ते यद[ति]बहलः कान्तला[वण्य]पूरः
प्रत्यङ्गं यत्तटमनुसरन्त्यूर्मयो विभ्रमाणाम् ।
उन्मग्नं य[त्] स्फुरति च मनाक् कुम्भयो[र्]युग्ममेत-
त्तन्मन्येऽस्याः स्मरगजयुवा गाहते हृत्तडागम् ॥

१७९४ च(व?)रयति युवनेत्रक्षेत्रपीयूषवृष्टिं
नवजलध[र]रेखारोमराजिच्छलेन ।
यदुदयति कलापि प्रक्रियन्ते(?) तदुच्चैः
स्तनघनसमयोऽस्यामाविरस्ताति(?) विघ्नः ॥

१७९५ यथा यथा स्यात्कुचयोः समुन्नति-
स्तथा तथा लोचनमेति वक्रताम् ।
अहो सहन्ते बत नो परोन्नतिं
[नि]सर्गतोऽन्तर्मलिना ह्यसाधवः ॥

१७९६ अयमङ्कुरभाव एव तावत्
कुचयोः कर्षति लोकलोचनानि ।
इतरेतरपीडिनीमवस्था(स्थां)
कुचयोः श्रीरनयोः कथं भवित्री ॥

१७६७ उद्यति तरुणिमा(म)तरणौ गच्छति चास्तं शिशुत्वशीतरुचौ ।
कुचचक्रवाकयुगलं त्रिवलितटि[तटि]न्यां मिथो मिलति ॥

१७६८ आजन्मावधि लग्ना शिशुताऽपि गता नवे न विश्वासः ।
रतियौवनमनुरुन्धे त्रिवलि(ली)वन्धेन तन्वङ्गी ॥
—केषाम्

*सौन्दर्यगर्विता*

१७६९ कूर्पासेन स्थगितहृदया सम्पुटं हाटकीय-
मंसन्यस्ताञ्चलनिवसना चामरं नीरदाभम् ।
यत्रासीना रतिरिव [व]णिक्प्रेयसी वि[वी]थिकायां
विक्रि(क्री)णीते मुकुलितमुखी संज्ञया मौक्तिकानि ॥

१८०० भामिन्यो विदधति भागधेयभाजः
केय(यू)रं स्रजमवतंसमंप(म्बु)जातैः ।
धिग्दैवं मम तु विभूषणं विदूरे
रोलम्बादधरे(र)निवारणं पुमर्थः ॥

१८०१ विक्रीय विस्पष्टमुखेन बाला मालाकृतः कैरवकोरकाणि ।
विक्रेतुकामा विकचां(चां)वुजानि च(चे)लाञ्चलेनाननमावृणोति ॥

*अथ सत्याख्यानम्*

१८०२ पदन्यासोगेहा[द्] बहिरहिफणारोपणसमो
वचो लोका[लभ्यं] कृपणधनतुल्यं मृगदृशः ।
निजावासादन(न्य)द्भवनमपरद्वीपतुलितं
पुमा[न]न्यः कान्ताद्विधुरिव चतुर्थीसमुदितः ॥

१८०३ अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता
तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ।

सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामपि
प्राच्यैः पुत्री(त्रि) निवेदिताः कुलवधूसिद्धान्तधर्मा अमी ॥

—राजशे०

१८०४ सञ्चारो रतिमन्धि(न्दि)[रा]वधि सखीकर्णावधी(धि) व्याहृतं
चेतः कान्तसमीहितावधि महामानोऽपि मौनावधिः।
हास्यं चाधरपल्लवावधि पदन्या[सा]वधि प्रेक्षणं
सर्वं सावधि नावधिः कुलभ(भु)वां प्रेम्णः पुनः केवलम् ॥

१८०५ चतुर्थेऽह्नि स्नातां त्र्यहविरहपाण्डूकृतमुखीं
रजोमुक्तां तन्वीमधिकचपलस्वच्छनयनाम्।
हरिद्राहीवेर(?)प्रचुरपटगन्धप्रणयिनी-
मधन्यः को भुङ्क्ते धृतकमलमालां कुलवधूम् ॥

१८०६ अकारि मृदुचापलं स्तनतटीदुक(कू)लाञ्चलं
गतं लघु विलोकितं नयनसीम्नि दोलायितम्।
त्रपां चपल रे मनस्त्वमधू(धु)[ना]पि नालम्बसे
वचोरचनचातुरी न क(कु)लकामिनीनां क्रमः ॥

१८०७ हारहीरकह(हि)रण्यभूषणैस्तोषमेति गणिका धनु(नै)षिणी।
हन्त कान्ते(न्त)नयनान्तपातकैरेव जीवति कुलाङ्गनाजनः ॥

१८०८ श्लथः कान्तः स्वस्यां सततमितरस्यां प्रणयवान्
प्रियस्तेनाप्येषा न भजति विशेषात् परिभवम्।
परन्तु प्रेयांसं यदुपहसति प्राकृतजनोऽ-
प्यतो हेतोश्च(श्चे)तो दलति दड(ल)दिन्दीवरदृशः ॥

१८०९ लज्जावशावनतमन्थरदृष्टिपातं यैश्चुम्बितं कुलवधूवदनारविन्दम्।
तेषामनेकपुरुषव्रणिताधरेषु सक्तिः कथं भवतु वेशवधूमुखेषु ॥

१८१० जीवति जीवति नाथे म्रियते च मृते मुदा[युता]मुदिते ।
सहजस्नेहरसाला कुलवनी(नि)ता केन तुल्या स्यात् ॥

—शाङ्र्गधरस्य

१८११ अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
किन्त्व[न्ये]ऽपि जना वदन्ति सुभगो ह्यस्या पतिर्नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्ये मय(या) निर्जितम् ॥

—रुद्रस्य

१८१२ भक्तिः प्रेयसि संश्रितेषु करुणा श्वश्रूषु नम्रं शिरः
प्रीति[र्]ज्ञा[ति]षु गौरवं गुरुजने क्षान्तिः कृतागस्यपि ।
अम्लानो(नः)कुलयोषितां व्रतविधिः सोऽयं विधेयः पुन-
र्मद्भर्तुर्दयिता इति प्रियसखीबुद्धिः सपत्नीष्वपि ॥

—बिल्हणस्य

१८१३ निर्व्याजा दयिते ननान्दृषु नता स्व(श्व)श्रूषु भक्ता भव
स्निग्धा बन्धुषु वत्सला परिजने स्मेरा सपत्नीष्वपि ।
भर्तुर्मित्रजने सनर्मवचना खिन्ना च तद्वैरिषु
प्रायः संवननं नतभ्रु तदिदं वीतौषधं भर्तृषु ॥

—राजशे०

१८१४ नातः परं कुलमतः परतो न शीलं
नातः परं च करुणासदनं मृगाद्याः ।
यद्बाष्पबिन्दुपराधवतोऽपि पत्यु-
रुत्सङ्गितेन चरणेन तयापनिन्ये ॥

**प्रेमाख्यानम्**

१८१५ संसारः प्रतिभाति येन सरसः सर्वाण्यहानि क्षया-
णायान्तजीवत(?)यौवने सफलतां धत्तः सरूपश्रिणी(णि) ।

चन्द्रोद्यानचसंतासका(?) किल कुक्कुटकारादिकानामुपा-
देयत्वं कुरुते चरद्भिजयते तत्प्रेम यूनोश्चिरम् ॥

—भीमसिंहस्य

१८१६ बाह्योपाधिपराङ्मुखाय मनसा निःसन्धि संसीव्यते
यूनोरद्भुतसाहसैक(कु)[ल]गुराव(?)भावाय तस्मै नमः ।
याऽसौ क्रीडति दुर्दिनं सुदिनयन्नन्धं तमश्चन्द्रयन्
प्रासादं पथयन् वनं भवनयन् क्षेत्राणि पर्यङ्कयन् ॥

१८१७ कमलनयन राधास्मासु के चाभवत्सा
वद विबुधसखीभिर्भामया पृच्छमानः ।
हृदयनिविडदाहो रुद्धकण्ठोऽश्रुपूर्णः
पुलकलुलितगात्रः पद्मपुञ्जे पपात ॥

१८१८ भवति हृदयहारी कोऽपि कस्यापि हेतु-
र्न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।
किसलयितवनान्ते कोकिलारावरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः ॥

*प्रासङ्गिकौ(?)*

१८१९ बन्धनान्यपि बहु(हू)नि भवन्ति
प्रेमरज्जुकृतबन्ध[न]मन्यत् ।
दारुभेदनिपुणोऽपि षडंघ्रि-
र्निःक्रियो भवति पङ्कजबद्धः ॥

१८२० ममावलम्बस्व करं वराङ्गि
प्रसीद जीवेश्व[र] निःसराग्रे ।
इति ब्रुवद् वेश्मनि स(सं)प्रदीप्ते
मिथोऽनुरोधान् मिथुनं विपन्नम ॥

१८२१ ग्रीष्मभीष्मरुते(चे)स्तपे शून्यरथ्यान्तरस्थयोः ।
अन्योन्यालापसुखिनोर्यूनो[श्]चन्द्रायते रविः ॥

१८२२ प्रेम सत्यं तयोरेव ययोर्योगवियोगयोः ।
वत्सरा वासरीयन्ति वत्सरीयन्ति वासराः ॥

१८२३ दलितमृणालीदलयोस्तन्तुरिव प्रेम सज्जनयोः ।
विश्ल(श्ले)ष एव भजते स व्यक्ति(क्ती)भूय विस्तारम् ॥

१८२४ प्रेमैकतानमनसोरभिन्नैव तनुस्थितिः ।
परिरम्भसुखात् द्वयमनयोरनुमीयते ॥

१८२५ दृगन्तसूचिकासक्तसुदृढस्नेहतन्तुना ।
कामिनोः सीव्यति प्रायो मनसी मकरध्वजः ॥

१८२६ स्वप्रकाशमनिर्वाच्यमात्मद्वैतनिवर्तकम् ।
विकल्पातीतमानन्दं प्रेम ब्रह्मैव केवलम् ॥

१८२७ भिन्ना व्यक्तिः परं यूनोरेकमेव हि जीवितम् ।
न हिं गोलकयोर्भेदे भिद्यते चक्षुरिन्द्रियम् ॥

१८२८ वृती(ति)षु यथा चक्रीयति पञ्जरशकुनीयति प्रमदा ।
एतत्प्रेम यदन्यद् यूनोः प्रेमोपहासाय ॥

१८२९ दम्पत्योः पाक्षिकात्प्रेम्णः प्रेमाभावः सुखावहः ।
एककर्णस्थताटङ्कादताटङ्कं वरं मुखम् ॥

—केषाम्

१८३० कामिनोरिव यत्प्रेम कामिनो[रि]व केवलम् ।
इति सचिन्त्य [मनसि] वक्ति तत्त्वं हरि[ः]कविः ॥

*अथ कुलटाख्यानम्*

१८३१ दृशा कश्चित् कश्चि[ल्]ललितभुजवल्लीविलसनैः
करा[ग्रै](तैः) कश्चिन्नखविलिखने(नैः) कञ्चिदभिकम् ।
स्पृशन्त्यः संबाधे गुरुभिरनभिप्रेक्षितपथे
यथेष्टं चेष्टं[ते] स्फुटकुचतटाः पश्य कुलटाः ॥

१८३२ नाम्बुजैर्न कुमुदैरुपमेयं
स्वैरिणीजनविलोचनयुग्मम् ।
नोदये दिनकरस्य न चेन्दोः
केवले तमसि यस्य [वि]हारः ॥

१८३३ दुर्दिवसे घनतिमिरे दुःसञ्चारासु नगरवीथीषु ।
भर्तुर्विदेशगमने परमसुखं जघनचपलायाः ॥

१८३४ पर्यङ्कः स्वास्तरणः
पतिरनुकूलो मनोहरं सदनम् ।
तृणमिव लघु त्पन्पात्प(मन्यन्ते)
कामिन्यश्चौर्यरतलुब्धाः ॥

*स्वयंदूती*

१८३५ इयं सुरतरङ्गिणी न पुनरत्र नौ सङ्गमोऽ-
भवत्तरणिमज्जनं पथिक मैव भीतिं भज ।
निधाय हृदि केवलं पृथुलचारुकुम्भद्वयं
स्वनद्घनघनागमे घनरसस्य पारं व्रज ॥

१८३६ कस्येदं भवनं ममैव भवती का सुभ्रु टाटां(वारां?)गना
केयं मुग्धतरा सखी मम पतिर्गेहेऽस्ति किं तेन वा ।
इत्थं पान्थवचो दिनान्तसमये गूढार्थमाकर्ण्य वै
मन्दान्दोलितकुड्मलस्तबकया तन्व्याऽवधूतं शिरः ॥

१८३७ शून्यं वेश्म चिराद् गतो गृहपतिर्जाताऽधुना शर्वरी
स्थातुं नोचितमत्र गच्छ निपुणं लोकैरनालोकितः ।
इत्थं लोलदृशा ह्यसावभिहितो दासीमुखेनाध्वगः
स्मित्वा किञ्चिदिव क्व यामि रजनी जातेत्युदीर्य स्थितः ॥

१८३८ सदनमिव मदीयं निर्जनः पान्थ पन्थाः
कुसुमशर इवास्मिंस्तस्करा दुर्निवार्याः ।
दयित इव दिगन्तं प्राप्तवानेष भानु-
र्मदन सुभग गन्तुं नानुमन्तुं समीहे ॥

१८३९ यदि गन्तासि दिगन्तं पथिक पतिस्तत्र(?)संबोध्यः ।
नयनश्रवणव(वि)हीना कथमुप[च]र्या मयी(यै!)कया श्वश्रूः ॥

१८४० नौरियमकर्णधारा दुस्तरतोरा(या) तरङ्गिणी चेयम् ।
रविरस्ताचलचुम्बी सङ्कटपतितोऽसि रे पान्थ ॥

१८४१ नगच्छायाहि(भि)राम्य(मे)यं वसतिः परिगृह्यताम् ।
ग्रीष्मे काचिज्जनोपेता पान्थमित्थमयीवदत्(?) ॥

१८४२ को धन्यः सखि सुस्थितेन मनसा को वेधसा निर्मितः
कः प्रेयान्मदन[श्च] कस्य फलिनः(तः) प्राचीनपुण्यद्रुमः ।
एतद् यस्य कृते दिवानिशमविश्रान्तः स्खलद्वारिभि-
र्मीनाल्लोचनगण्डुकैः स्नपयसे वक्षोजकुम्भद्वयम् ॥

—रुद्रस्य

१८४३ मुग्धे कं हृदय''सुचिरं रोमाञ्चिताङ्गी मुहु-
र्लीना मन्थरतारतां(कां) विलुलितापाङ्गां दधाना दशाम् ।
सुप्तेवालिखितेव शून्यहृदयलिखावाशपी(?) भव-
स्यात्मद्रोहि(णि) किं ह्रिया कथय मे गूढानि हन्ति स्मरः ॥

— कस्य

१८४४ अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाऽद्य विलोक्यते ।

—अमर(रु)कस्य

१८४५ कान्तं कनकजम्बीरं कर्णे किमपि कुर्वति ।
अगारलिखिते भानौ बिन्दुमिन्दुमुखी ददौ ॥

कुलटोक्तिः

१८४६ वयं बाल्ये बालांस्तरुणिमनि यूनः परिणता-
वपीच्छामो वृद्धान् परिणयविधिस्तु स्थिर इति ।
त्वयाऽऽरब्धं जन्म क्षपयितुमनेनैकपतिना
न मे गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत् ॥

१८४७ पृथ्वी तावत् त्रिकोणा गिरिजलधिनदीकाननैः साऽपि रुद्धा
तत्राप्यर्द्धं युवत्युः(त्यः) कति कति पितरो भ्रातरः केऽपि षंडाः ।
मन्दा वृद्धाश्च बालाः कति कति मुनयो हा विधेर्दुश्चरित्रं
मां तथ्यं ब्रूहि मुग्धे परपुरुषरतिः स्वप्नमध्ये किमस्ति ॥

१८४८ एते वारिकणान् किरन्ति पुरुषान् वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वमन्ति न पुनस्ते ते पुनर्नायकान् ।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते नरान्
धातः काता(त)रमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥

—भानुकरस्य

१८४९ आकारेण शशी गिरा परभृतः प(पा)रावतश्चुम्बने
हंसश्चङ्क्रमणे मनोभवसमो रत्यां विमर्दे गजः ।

इत्थं भर्त्तरि मे स[म]स्तयुवतिश्लाघ्यैर्गुणैः किञ्चन
न्यूनं नास्ति परं विवाहित इति स्यान्नैकदोषो यदि ॥

—मधुरवाण्याः

१८५० यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीपरिमला मन्दाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसी(सि) वेतसीतरुतले चेतः समुत्कण्ठते ॥

—शीलायाः

१८५१ सुखशय्या ताम्बूलं विश्रब्धाश्लेषचुम्बनादीनि ।
तुलयन्ति न लक्षांशं त्वरितक्षणचौर्यसुरतस्य ॥

*कुलटाया नायकावलोकनम्*

१८५२ माद्यन्मांसलतुङ्गपुङ्गवककुत्कूटोन्नतांसस्थलः
कालिन्दीजलकान्तकुन्तलशिराः पूर्णेन्दुबिम्बा[न]नः ।
एकः कोऽपि मनोहरः पथि [युवा] दृष्टः स यस्मिन्नभूत्
दृष्टे नष्टनिमेश(ष)या मद[व]शा[ल्]लब्धं फलं जन्मनः ॥

१८५३ ज्ञाता मैत्री सह न सुभगा पाती(ति)भिर्लोचनान्तैः
कर्णाकर्णि प्रथितमयशो बन्धुवर्गैरभाणि ।
तस्या दृष्टिस्तदपि न मनाङ् मुञ्चति प्राणनाथं
को जानीते कुवलयदृशः कीदृशः प्रेमबन्धः ॥

—कयोः

१८५४ पुरो नीलज्योत्स्ना तदनु मृगनाभीपरिमल-
स्ततो लीलावेणुक्वणितमनु काञ्चीकलरवः ।
ततो विद्युद्वल्लीवलयिति(?)चमत्कारिमुदिर-
प्रगल्भं लावण्यं तदनु सहजानन्दमुदगात् ॥

*विटस्य नाय(यि)कावलोकनम्*

१८५५ अये केयं लीलाधवलगृहवातायनतटे
पृथुश्रोणीभारा कुचकलशहारा विजयते।
अहो नेत्रद्वन्द्वं विलसति विलङ्घ्य श्रुतिपथं
कथं न त्रैलोक्यं जयति म[द]नः स्मेरवदनः॥

१८५६ पुरः स्थित्वा किञ्चिद् वलितमुखमालोकय सखे
[सखे]दाः स्थास्यन्ति भ्रु र्वामदमदृष्टा तव दृशः।
इतश्चञ्चत्कारं [र]णितमुखरात्सौधशिखरा-
दराकायां कोऽयं कवचयति चान्द्रेण महसा॥

—विद्ध०

१८५७ अये केयं धन्या धवलगृहवातायनतले
तुलाकोटिक्वाणैः कुसुमधनुषं जागरयति।
न हि त्वं जानीषे त्रिदशतटिनीतीरनिकटे
कपालं यस्यास्ते परिणतिरियं तस्य कृतिनः॥

१८५८ अंसे विन्यस्य सख्या भुजमपरक[र]स्यार्द्धचन्द्रेण मध्यं
बिभ्राणाधूयमानस्तनतटवसना गन्धवाहेन मन्दम्।
पन्थानं दृग्विलासैरिव न[वल]दलैरास्तृणन्ती समन्तात्
सौधाग्रे कस्य साक्षात् परिणमति तपःसिद्धिरेषा सुवेषा॥

१८५९ करे वेणीमेणीसदृशनयना स्नानविरतौ
दधाना सौधाग्रे हरनयनभस्मीकृतमपि।
इयं मुग्धा दुग्धाम्बुधिसलिलकल्लोलसदृशा
दृशा भूयो भूयो मनसिजतरुं पल्लवयति॥

१८६० तुहिनकिरणबिम्बे खञ्जरि(री)टप्रचारो
दमनकतरुशाखालम्बिजम्बीरयुग्मम्।

विकटकमलमध्ये दाडिमीबीजपङ्क्ति-
स्त्रितयमिदमपूर्वं ले(लो)चनाभ्यां व्यलोकि ॥

—केषाम्

*कुलटायाः सखीं प्रत्युक्तिः*

१८६१ श्यामं तद्यमुनातटं विपिनभूः श्यामा तमालद्रुमैः
श्यामः कोऽपि किशोरकः सखी(खि)पुनः श्यामे तदीये दृशौ ।
आकल्पः सकलो मम(मा)पि रजनौ श्यामस्तदेतै रसः
श्यामः कोऽप्युदपादि येन जगदप्यन्तर्हितं तत्क्षणात् ॥

—मु(सु?)राचार्यस्य

१८६२ अकस्मादेकस्मिन् पथि सखि मया यामुनतटं
व्रजन्त्या दृष्टोऽयं नवजल[धर]श्यामलतनुः ।
स दृग्भङ्ग्या किं वाऽऽकुरुत न हि जाने तत इदं
मनो मेऽद्यालोलं तदपि गृहकृत्ये न चलते ॥

—जयन्तस्य

१८६३ स्वामी कुप्यति कुप्यतां परिजना निन्दन्ति निन्दन्तु मा-
मन्यत्किं प्रथतामयश्च जगति प्रौढो ममोपद्रवः ।
आशास्यं पुनरेतदेव यदिदं चक्षुश्चिरं वर्द्धतां
येनेदं परिपाल्यते मुररिपोः संसारसारं वपुः ॥

—पुष्कराक्षस्य

१८६४ स्वामी निहन्तु विहसन्तु पुनः सपत्न्यो
भामं भजन्तु गुरवः पितरश्च लज्जाम् ।
एतावता यदि कलङ्कि क(कु)लं तथापि
रामानुजे मम तनोतु मनोऽनुरागम् ॥

१८६५ मुरलीरवमाधुरीभरेण स्फुरता चारुविलोचनाञ्चलेन ।
पथि यो न गतिं ददाति मातः स गतिं दास्यति किं ब्रवीति वेदः ॥

१८६६ सखि पश्य चित्रमेकं नन्दनिकेताङ्गणे नित्यम् ।
गोधूलिधूसराङ्गो नृत्यति वेदान्तसिद्धान्तः ॥

१८६७ निन्दतु मां [तु] ननान्दा पतिरपि मन्दादरो भवतु ।
उच्चैरिदं त(व)दामो म[म] सखि दामोदरः सर्वम् ॥

—केषाम्

१८६८ असमञ्जसमसमञ्जस-
मसमञ्जसमेतदाचरितम् ।
वल्लवकुमारबुद्ध्या हरी(रि)
हरि हरिरीक्षितः कुतुकात् ॥

—संयज(जय)स्य

*कुलटां प्रति सख्युक्तिः*

१८६९ शुश्रूषस्व गुरून्निवर्तय सखी(र्व)न्दस्व बन्धुस्त्रियः
कावेरीतटसन्निविष्टनयने मुग्धे किमुत्ताम्यसि ।
आस्ते स्वस्ति समीप एव भवतादेलालतालिङ्गन-
न्यञ्चद्बालतमालदन्तुरदरी तत्रापि गोदावरी ॥

१८७० सौन्दर्येण वशीकृता वयमतस्त्वां किञ्चिदाचक्ष्महे
कालिन्दीं यदि यासि सुन्दरि पुनर्मा गाः कदम्बाटवीम् ।
तत्रैकान्तनितान्तनिर्मलतमःस्तोमोऽस्ति यस्मिन् मनाग्
अग्रे लोचनसीम्नि नोत्पलदृशः पश्यन्ति पर्त्युगृहान् ॥

१८७१ सायं दामग्रथनसमये लग्नया कर्णमूले
सख्या मन्दस्मितमधुरया सादरं सूच्यमानः ।
धन्यः कोऽयं कथय सुकृती यत्कथायां पुरस्ता-
द(दं)गुल्यग्रं निजमपि मुहुः सूचिविद्धं न वेत्सि ॥

१८७२ मत्तेभकुम्भयुगलं परितो विदीर्णं
मुक्तावलिराशिरभितः पतितो विभाति ।
लीनाहरिणा (?) इव तन्वि तवाङ्गचेष्टाः
शङ्के सुधांशुवदने सदने हरिस्ते ॥

१८७३ हां हन्त (?) दैवहतके पुनरुद्यताऽसि
तामेव केसरवनीमधुनाऽपि गन्तुम् ।
तद् गच्छ गच्छ पुनरेव सगण्डपालि-
मत्रालिरालिह(?)नु तेऽधरपल्लवान्तम् ॥

१८७४ कामं वपुः पुलकितं नयने धृतास्रे
वाचः सगद्गदतराः सखि कम्पि वक्षः ।
ज्ञातं मुकुन्दमुरलीरवमाधुरी ते
चेतः सुधांशुवदने तरलीकरोति ॥

१८७५ अयि दुर्जनगर्जनेन किं सरले नम्रमुखी विषीदसि ।
प्रतियोगिनि देवकीसुते परिवादोऽपि तपोभिरुन्नतै(तः) ॥

१८७६ तरले न कुरु विलम्बं कुम्भं सम्भृत्य मन्दिरं वा(या)हि ।
यावन्न मोहमन्त्रं शंसति कंश(स)द्विषो वंशी ॥

प्रत्युक्तिः

१८७७ आकर्णिते भवति च प्रथमं दिदृक्षा
दृष्टे पुनर्भवति सङ्गमनाभिलाषः ।
हा दूति साधुरमितेऽपि विपाका(क)शङ्का
दुःखायो(य) केवलमभूत्सुभगानुरागः ॥

१८७८ तस्य त्वया कर्कशवादिनोऽपि
प्रकाशनीयं मसृणत्वमे[वम्?] ।
प्रेम्णोऽस्ति भग्नस्य न हि प्ररोहः
पुष्पस्य वृन्तादिव विच्युतस्य ॥

*दूत्युपहासः*

१८७९ निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

१८८० साधु दूति पुनः साधु कर्तव्यं किमतः परम् ।
मदर्थे त्वं विलग्नाऽसि दन्तैरपि नखैरपि ॥

*विट[स्य] नारीं प्रत्युक्तिः*

१८८१ अमुष्यां संक्रान्तौ तव तरुणि तारुण्यतरणिः
स्मरो दाता देवस्त्रिवलितटिनीतीरनिकटे ।
अमू ते वक्षोजौ सखि सुघटितौ हाटकघटौ
महादानं कस्मि[न्] भवति वद सारं गणयते ॥

१८८२ मुग्धे नार्जुनतां [प्रया]ति नयनं मध्ये तथा कृष्णतां
द्वे रूपे दधताऽधुना विरचितः कर्णेन संविग्रहः ।
त्वं कृष्णार्जुनकर्णविग्रहवती मा(सा)क्षात् कुरुक्षेत्रतां
प्राप्तासि त्यद(त्वद)वाप्तिरेव तरुणि श्रेयः किमन्यत्परम् ॥

१८८३ स्तुव(मः) कं वामास्मि(क्षि) क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशी(शि)मुखी(खि) यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥

१८८४ न जाने वक्षोजाचलविमललावण्यतटिनीं
जनः को वा तीर्त्वा तरुणी(णि) नवमोक्षाय भविता ।
वसन् नाभीतीरे तव चकितसारङ्गनयने
स्मरो धन्वी चौरः सकलमवधीत् कामुककुलम् ॥

—केषाम्

१८८५ वसन्तः सन्नद्धो विपिनमजनं त्वञ्च तरुणी
स्फुरत्कामावेशा वयसि वयमभ्याहितभराः ।
व्रज त्वं वा मुग्धे क्षणमिह निलम्बस्व यदि वा
स्फुटं तावज्जातः पिशुनवचनानामवसरः ॥

१८८६ प्रविश झटिति गेहं मा बहिस्तिष्ठ बाले
ग्रसनसमयवेला वर्तते शीतरश्मेः ।
तव मुखमकलङ्कं वीक्ष्य राहुः स नूनं
ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय ॥

१८८७ तनोः(?) सुवर्णादपि भिन्नवर्णो
धम्मिल्लभारस्तुलितान्धकारः ।
अपास्तभृङ्गस्तव दक्तरङ्गः
कल्याणी(णि)कस्यासि परा तपस्या ॥

१८८८ दूरमस्तु दरघूर्णिततारं
शारदेन्दुमुखि वीक्षितमक्ष्णोः ।
एतदेव मम पुण्यमगण्यं
यत् क(कृ)शोदरि दृशोरि(र)तिथिस्त्वम् ॥

१८८९ अयि चैला(लां)चलेनाद्य कल्याणि मुखमावृणु ।
कुड्यविहितकर्माणि कुर्वन्तु मुनिपुङ्गवाः ॥

१८९० स्नानान्ते दिवसान्ते लोचनकोणेन शोणेन ।
मा पश्य युवती(ति) यूनो युवजनहीनो भवेद् ग्रामः ॥

विटोक्तिः

१८९१ चक्षुःप्रीतिः प्रसन्ने मनसि परिचये चिन्त्यमानाभ्युपाये
याते रागे गुरुत्वं विकसति सुतरां गोचरे दूतिकायाः ।

आस्तां तावत्स दूरे सरभसदयितालिङ्गनानन्दलाभ-
स्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं सन्तनोति ॥

१८९२ ···ताण्डवभ्रुवितम(?)चलद्वक्त्रं कुरङ्गीदृशा
साकूतं च सकौतुं(तु)[कं]च सुचिरं न्यस्ताः किलास्मान् प्रति ।
नीलाब्जव्यतिमिश्रकेतकदलद्राघीयसीनां स्रजां
सोदर्याः सुहृदः स्मरस्य सुधया दिग्धाः कटाक्षच्छटाः ॥

—वीर्यमी(मि)त्रस्य

१८९३ वारं वारं करकिसलयैनाम्मृशन्त्यश्रुधारां
भूयो भूयो दिशि दिशि दृशं शोणकोणां क्षिपन्ती ।
मन्दं मन्दं श्वसितनुदितप्रोच्छलच्छोणनासा
दृष्टा स(न?)ष्टा मुकुलितमुखी काऽपि वासायताक्षी ॥

—हरिकवेर्मम

१८९४ लीलान्दोलितचन्दनोज्ज्वलभुजालङ्कारझङ्कारिणी
यद्यायाति कदापि पङ्कजमुखी के वा वयं के सुराः ।
अर्द्धोद्घाटितपीवरस्तनतटाछाली(?)समुल्लासिनी
सा चेन्मामिह भासते यदि तदा को वा मदन्यो हरिः ॥

१८९५ भ्रातः कातरकां(तां) जहीहि हृदयस्थैर्यं दधीथाः क्षणं
प्राप्ता सा स्मरमार्गण(व्र)णगत्राणौ(?)··प्रेयसी ।
येन श्वासतरङ्गसौरभमिलद्भृङ्गावलीवारणा-
लीतां(लां)दोलितबाहुकङ्कणरणत्कारो .[मुहुर्]मूर्च्छति ॥

—शिरोमणेः

१८९६ आयाता सहसा रहोऽपि मिलितं(तुं) दैवाद् दिवा सुन्दरी
सोत्कण्ठाऽप्यतिकातरेण विहितः कण्ठग्रहो ना(नो) मया ।
किं वाऽहं कलयामि दैवहतकः काले गते प्रार्थिते
सारङ्गच्युतसायको नृप इवोन्मृद्नामि पाणिद्वयम् ॥

१८९७ वारं वारं रतिर[स]वशाद् दूरमुत्सारितोऽभू-
स्तत्क्षन्तव्यं प्रियसख सुखाकाङ्क्षिणः को विचारः।
हं(हे) हार त्वं वससि हृदये वेत्सि तस्या रहस्यं
ब्रूयाः सत्यं मयि मृगदृशः कीदृशः प्रेमबन्धः॥

१८९८ निस्त्रिंश निःकरुण निर्मम निर्निमित्त-
मद्वञ्चक त्वमपि सम्प्रति वञ्चितः स्याः।
इत्यक्षराणि लिखितानि विलोक्य कश्चित्
सङ्केतकेतकिदले सुतरामतास्यत्॥

—केषाम्

१८९९ आस्तामनस्तमित एव त्रु(कु)वारभानु-
रुन्मीलयन्तु गुरवोऽपि विलोचनानि।
जानीहि रे हृदय जीवती(ति) पञ्चपाणौ(बाणे)
के नाम वामनयनां विनिवारयन्ति॥

—शिरोमणेः

१९०० सुरभिरुपैति समीरः सरसिजमालाकुलाः ककुभः।
शम्पेव तमसि तेजः शङ्के पङ्केरुहानना याति॥

१९०१ भे(भै)रवदर्शनसमये कैर[व]बन्धुर्विलोकितः कोऽपि।
यद्विरहादिदमल्पं दिनमपि कल्पैः समं याति॥

१९०२ एतन्मयमिव जातं निपतितमस्यां मनो नूनम्।
नायात्यपि यदुपायात् कथमपि कायात्कुरङ्गनयनायाः॥

१९०३ यदैवारभ्यान्तः पदमुपहितं पद्मलदृशा
तदैवेदं चेतः क्वचिदपि न रम्ये च रमते।
इदं चान्यज्जातं स्मरणपुनरुक्तव्यसनिन-
स्तदाकाराः सर्वे मम खलु पदार्थाः परिणताः॥

१९०४ लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव वा
प्रत्युप्तेव च व्रज(वज्र)सारघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥

*अथ विप्रलम्भशृंगारः । प्रियप्रस्थाने कान्तावस्थाख्यापनम्*

१९०५ यामीति स्फुटवादिनि प्रियतमे मुद्राऽभवत्कङ्कणं
केलि(ली)सद्मवही(हि)र्गतैकचरणे भूमौ शरीरस्थितिः ।
अन्तर्द्धानमुपागते नयनयोस्तस्यास्तु कान्या कथा
लाजस्फोट इव स्फुटत्यविरतं हारोऽपि वामभ्रुवः ॥

१९०६ यामि प्रेयसि वारिदागमदिने जानीहि मामागतं
चिन्तां चेतसि मा विधेहि कथयत्येवं सबाष्पे मयि ।
निःश्वासैः पवनायितं वरतनोरङ्गैः कदम्बायितं
कान्त्या केतकपत्रकायितमहो दृग्भ्यां पयोदायितम् ॥

१९०७ यामीत्युक्ते हृदयपतिना पञ्चषाः शङ्खभूषाः
स्वैरं स्वैरं झिझिटिति गलिताः पाणिपङ्केरुहाग्रात् ।
नो यास्यामि(मी)त्यनुपदमिमां वाचमाकर्णयन्त्या-
स्तन्व्याः शेषा अपि चटचटेत्येव भङ्गं समीयुः ॥

१९०८ आयाते श्रुतिगोचरं प्रियतमप्रस्थानकाले जना-
ञ(त)ल्पान्तस्थितया तदाननमलं दृष्ट्वा चिरं मुग्धया ।
सोच्छ्वासं दृढमुनि(ष्टि)निर्भरगलद्बाष्पाम्बुधौतान्तया
स्वं वक्त्रं विनिवेश्य भर्तु(र्तृ)हृदये निःशब्दकं रुद्यते ॥

—केषाम्

१९०९ दृष्टः का[त]रनेत्रया चिरतरं बद्ध्वाऽञ्जलिं याचितः
पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः ।

इत्याक्षिप्य समस्तमर्थमघृणो गन्तुं प्रवृत्तः शठः
पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥

१९१० सायं बालमरालमन्थरगते यामीति हालाहल-
क्रूरं केलिकलाकलापविदुषो भर्तुर्मुखा[द्] दुर्वचः ।
श्रुत्वा त्रासभरेण हन्त सुदृशा कल्पान्तकालानल-
ज्वाला[जाल]जटाल एव शशिनो बिम्बस्तया वीक्षितः ॥

१९११ अद्य स प्रवसतीति सुभ्रुवः श्रोत्रसीमनि समागते सति ।
सद्य एव निजपाणिगुम्फिते पुष्पदामनि महोरगभ्रमः ॥

१९१२ कान्ते कथञ्चिद् गदितप्रयाणे
क्षणं विनम्रा विरहार्दिताङ्गी ।
ततस्तमालोक्य कदागतोऽसि(सी)-
त्यालिङ्ग्य मुग्धा मुदमाततान ॥

१९१३ यामीति प्रियदृष्टायाः प्रियायाः कण्ठवर्त्मनि ।
वाचा जीवी(वि)तयोरासी[त्] पुरो निःसरणे रणः ॥

*नायकं प्रति नाय(यि)कोक्तिः*

१९१४ लोलैर्लोचनवारिभिः सशपथैः पादप्रणामैः परै-
रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् ।
पुण्याहं व्रज मङ्गलं सुदिवसः प्राण प्रयातस्य ते
यत्स्नेहोचितमीहितं प्रिय मया तन्निर्गतः श्रोष्यसि ॥

—अमर(रु)कस्य

१९१५ गच्छ गच्छसि चेत्पान्थ पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥

—दण्डिनः

*नाय(यि)कानायकयोरुक्ती(क्ति)प्रत्युक्ती*

१६१६ स्मर्तव्या वयमिन्दुसुन्दरमुखी(खि) प्रस्तावतोऽपि त्वया
सत्यं नाथ यदि प्रदास्यति विधिर्जातिस्मरत्वं मम।
एकस्मिन्नपि जन्मनि प्रियतमे जातिस्मरत्वं कथं
प्राणाः पान्थ समं त्वयि(यै)व चलिताः काऽद्यास्ति जन्मैकता॥

१६१७ अस्मिन् प्रयाणसमये कुरु मङ्गलानि
किं रा(रो)दिषि प्रियतमे वद कारणं मे।
भो जीवनाथ विरहानलदीपितेन
धूम्रेण वारिगलि मम लोचनाभृतम्(?)॥

१६१८ स्मर्तव्याऽहं त्वया कान्ते न स्मरिष्याम्यहं तव।
स्मरणं चेतसो धर्मस्तच्चेतो भवता हृतम्॥

*नायकं प्रति नायि(य)कासख्युक्तिः*

१६१६ या बिम्बोष्ठरुचिः क्व विद्रुममणिः स्वप्नेऽपि तां लब्धवान्
हासश्रीसदृशैस्तपोभिरपि किं मुक्ताफलै[र्] भूयते।
तत्कान्तिः शतशोऽपि वह्निपतनैर्हेम्नः कुतः सेत्स्यति
त्यक्त्वा रत्नमयीं प्रयासी(सि) दयितां कस्मै धनायाध्वग॥
—शिवस्वामिनः

१६२० किं भद्रं प्रतिगच्छत स्ववव(य)वं ब्रूमः किमस्याः स्वयं
प्राणानामिह ग[म्य]तामिति हि नः सन्देहमुग्धा धियः।
किन्तु स्वस्ति फलप्रवासमिह च प्रत्यागतं नः शुभे
त्वां पश्येम गताः पुनः कथय किं प्राणाः परावर्त्तिनः॥

*अथ विरहिण्यनुतापः*

१६२१ य(या)स्यामीति समुद्यतस्य गदितं विश्रब्धमाकर्णितं
गच्छन् दूरमुपेक्षितो मुहुरसौ व्यावृत्य तिष्ठन्नपि।

तच्छून्ये पुनरास्थितास्मि भवने प्राणास्त एते दृढाः
सख्या(ख्य)स्तिष्ठत जीवितव्यसनितादम्भादहं रोदिमि ॥

१६२२ यात्रामङ्गलसंविधानरचनाव्यग्रे सखीनां ग[णे]
बाष्पाम्भःस्नपितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले ।
प्राणेशस्य मदीक्षणार्पितदृशः कृच्छ्रादतिक्रामतः
किं व्रीडाजडया मया भुजलतापाशो न कण्ठेऽर्पितः ॥

१६२३ स्वप्ने चाद्य मया पुरः प्रियतमो दृष्टश्चिरादागतो
यत्नेनाप्यनुकूलयन्नपि मया मानान्न सम्भावितः ।
पश्चाद् यावदुपैमि मन्मथकथारूढा तमालिङ्गितुं
तावन्मे सहसैव मृत्युसदृशः प्राप्तः प्रबोधोदयः ॥

*अथ विरहिणीं प्रति [स]ख्युक्तिः*

१६२४ मुग्धे दोर्लतिकां निधाय न कृतो द्वारोपरोधस्त्वया
लग्ना नो रुदती गतासि रभसात्तस्योत्तरीयांशुके ।
कालेऽस्मिन् कुसुमाकरे द्विगुणितप्रेमोत्सवे रागिणां
गच्छन्नग्रत एव मूढहृदये मुक्तस्त्वया वल्लभः ॥

—दोलन्ति(र्लति)काभीमस्य

१६२५ विश्रान्तो दिवसस्तटीमयमटत्यस्ताचलस्यांशुमान्
सम्प्रत्यङ्कुरितान्धकारपटले(लै)र्लम्बालका द्यौरभूत् ।
पद्यन्तर्विश वेश्मनः शशिमुखि द्वारस्थलीतोरण-
स्तम्भालम्बितबाहुवल्लि रुदती किं त्वं पथः पश्यसि ॥

—रुदतीब्रह्मणः

१६२६ आहारे विरतिः समग्रविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं तदेतदपरं यच्चैकनिष्ठं मनः ।

मौनञ्चेदमिदञ्च शून्यमखिलं यद् विश्वमाभाति ते
न ब्रूयाः सखी(खि) योगिनी कि[मसि वा] किं वा वियोगिन्यसि ॥

—राजशे०

१९२७ बाले नैते पयोदाः सुरपतिकरिणो नो बकाः कर्णशङ्खाः
सौदामिन्योऽपि नीताः कनकमयमिदं मण्डनं कुम्भपीठे ।
नैतत्तोयं विकीर्णं पतति मदजलं श्वासवाताबधूतं
तत्किं मुग्धे मुधा त्वं मु(म)लिनयसि मुखं प्रावृडित्यश्रुपातैः ॥

१९२८ मूकीभूताः पिकयुवतयः किं वसन्तेऽपि तस्मिन्
किं जातोऽसौ मलयमरुतां दुःप्रवेशः प्रवे(वे)शः ।
किं वा तस्मिन्नमृतमहसो न प्लवन्ते मयूखा
यत्रावासं कृशतनु तव स्वान्तचौरः करोति ॥

१९२९ गोपायन्ती विरहजनितं दुःखमग्रे गुरूणां
किं त्वं मुग्धे नयनविसृतं वाष्पपूरं रुणत्सि ।
नक्तं नक्तं नयनसलिलैरस(रेष) आर्द्रि(द्री)कृतस्ते
शय्योपान्तः कथयति दशामातपे शोष्यमाणः ॥

—मारुलायाः

१९३० स्फुरति यदिदमुच्चैर्लोचनं सुभ्रु वामं
स्तनतटमपि धत्ते चारुरोमाञ्चमालाम् ।
कलयति च यदन्तःकम्पताम(मू)रुकाण्डं
ननु वदति तदद्य प्रेयसा सङ्गमं ते ॥

१९३१ विरहे विटपच्छायां तन्वङ्गी(ङ्गि) किमु काङ्क्षसि ।
एकस्य बिश(स)सूत्रस्य छाया तेऽपि गरीयसी ॥

—भानु०

*विरहिणीसख्योरुक्तिप्रत्युक्तिः(क्ती)*

१६३२ इदानीं तीव्राभिर्दहन इव भाभिः परिवृतो
महाश्चर्यं सूर्यः किमु सखि रजन्यामुदयते ।
अयं मुग्धे चन्द्रः किमिति मयि तातं प्रकटय-
त्यनाथानां बाले किमिह विपरीतं न भवति ॥

—पुष्टिङ्करस्य

१६३३ किं केकीव शिखण्डमण्डितशिराः किं कीरवत्पाठकाः
किं वा हंस इवाङ्गनागतिगुरुः सारीव किं सुस्वरः ।
किं वा हन्त शकुन्तबालपिकवत्कर्णामृतस्यन्दनः
काकः केन गुणेन काञ्चनमये सञ्चारितः पञ्जरे ॥

१६३४ अत्रस्थः सखि लक्षयोजनगतस्यापि प्रियस्यागमं
वेत्त्याख्याति च धिक् शुकादय इमे सर्वे पठन्तः स्थिताः ।
मत्कान्ताय वियोगतापदहनज्वालावलीचन्दनः
काकस्तेन गुणेन काञ्च[नमये सञ्चारितः पञ्जरे] ॥

*विरहिण्यवस्थावर्णनम्*

१६३५ आदृष्टिप्रसरा[त्] प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिम(ष्व)हःपरिणतौ ध्वान्ते समुत्सर्पति ।
कृत्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियाऽस्मिन् क्षणे
[मा]भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥

१६३६ मुहुः पतति मेदिनीमनु मुहुः सखीं वीक्षतेऽ-
व्य(व)लम्ब्य गृहदेहलीं किरति दिक्षु चक्षुर्मुहुः ।
विनिन्दति विधं(धुं) मुहुर्विरहतापसन्तापि[ता]
पतन्नयनवारिभिर्वरतनुस्तनुं सिञ्चति ॥

१९३७ पतन्ति गिरिमूर्द्धनि प्रचुरवारिधारा भृशं
वहन्तु(न्ति?) खरमारुताः सुललिता लता कम्पती(ते)।
इदं पुनरसङ्गतं यदयमन्धकाराकुलः
शरत्तुहिनदीधितिः सरसिजोदरे सीदति ॥

१९३८ शय्या पुष्पमयी परागमयतामङ्गार्पणादश्नुते
ताम्यन्त्यन्तिकतालवृन्तनलिनीपत्राणि दाहोष्मणा।
न्यस्तञ्च स्तनमण्डले मलयजं शीर्णा[न्]तरं दृश्यते
क्वाथादाशु भवन्ति फेनिलमुखा भूषामृणालाङ्कुराः ॥

—केषाम्

१९३९ एतस्या विरहज्वरा[त्] करतलस्पर्शैः परीक्ष्यो न यः
स्निग्धेनापि सखीजनेन भयतः प्रस्थम्पचः पाथसाम्।
निःशेषीकृतचन्दनौषधी(धि)विधौ तस्मिंस्तडत्कारिणो
भाजास्फोटममी स्फुटन्ति मणयो विश्वेऽपि हारस्रजः ॥

—राजशे०

१९४० वक्त्रे या मृगनाभिपङ्करचनां खिन्नेव धत्ते परां
यस्याः सान्द्रमुरःस्थले निपतितं भारायते चन्दनम्।
अङ्गान्यप्यतिलालसा वहति या क्लेशेन तस्यामपि
न्यस्तोशीरभरः परः कथमहो निःस्त्रिंशता वेधसः ॥

—भानुषेणस्य

१९४१ विश्रान्ता दिवसप्रपञ्चितरुतैर्वाचालिता कोकिलैः
सख्यः सम्प्रति निर्भयाऽस्मि जहित प्राणेषु मे संशयम्।
इत्यन्ते दिवसस्य हन्त विगतत्रासामिवाभाषिणीं
ज्योत्स्नाकैरवभैरवो नयति तां मोहं प्रदोषोदयः ॥

—सूक्ति०

१९४२ दुःखं दीर्घतरं वहत्यपि सखीवर्गाय नो भाषते
शैवालैः शयनं सृजत्यपि पुनः शेते न वा लज्जया ।
कण्ठे गद्गदवाचमञ्चति दृशोर्धत्ते न बाष्पोदकं
सन्तापं सहते यदम्बुजमुखी तद् वेद चेतोभवः ॥

—भानुक०

१९४३ कूर्पासं परिध[त्]स्व धूपय गृहं निर्माहि पुष्पस्रजं
पाटीरं परिपिण्डि मण्डय वपुः कल्याणी(णि) सन्ध्या गता ।
इत्थं केलिशुके तु जल्पति मुहुः प्रत्यग्रपान्थस्त्रियो
विश्राम्यन्ति दृशोः कदम्बमुकुलस्थूलाः पयोबिन्दवः ॥

१९४४ न नीतमुपनासिकं परिमलव्ययाशङ्कया
न हन्त विनिवेशितं विरह[वह्नि]कुण्डे हृदि ।
दृशोर्बहिरि[ति]श्रुतो न निहितं प्रियप्रेषितं
करे कमलमर्पितं मृगदृशा दृशा पीयते ॥

१९४५ यदेतन्नेत्राम्भः पतदपि समासाद्य तरुणी-
कपोले व्यासङ्गं कुचकलशमस्याः कलयति ।
पुनः श्रोणीबिम्बं समुचितविलासं तदुचितं
स्वभावस्वच्छानां विपदपि सुखं दन्तुरयति ॥

१९४६ अस्मिन् वर्षमहे न वर्तत इदं यत्कामदेवोत्सवे
स्थेयं पुत्रो(त्रि) निरञ्जया तदधुना किञ्चिन्मुखे दीयताम् ।
इत्युक्ते जरतीजनेन कथमप्यध्वन्यवध्वा ततः
पर्यस्तेऽहनि कल्पितश्च कवलो धौतश्च धाराश्रुभिः ॥

१९४७ भ्रातः पान्थ पथि त्वया न पथिकः कश्चित्समासादितो
बाले नैकशतानि कीदृश इति प्रख्याप्यतां वल्लभः ।
यं दृष्ट्वा प्रमदाजनस्य भवतः स्फारे मुदा लोचने
स ज्ञेयो दयितो ममेति पथिकायावेथ(द्य) मोहं गता ॥

—केषाम्

१९४८ तन्वङ्ग्या गुरुसन्निधौ नयनजं यद् वारि संस्तम्भितं
तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः।
मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता
श्वासायाससमागतालिसरणिव्याजेन धूमावली ॥

—अम०

१९४९ परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिम(मि)लनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताक्षे[प]वलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

—रत्नावलीतः

१९५० वीणामङ्के कथमपि सखीप्रार्थनाभिर्निधाय
स्वैरं स्वैरं सरसिजदृशा गातुमारब्धमेव।
तन्त्रीबुद्ध्या किमपि विरहक्षीणदीनाङ्गवल्ली-
मेनामेव स्पृशति बहुशो मूर्च्छना चित्रमेतत् ॥

—भानु०

१९५१ श्रुत्वा बहिः क्वचन कञ्चन काऽपि शब्दं
मत्वा विवर्तनमहो दा(द)यिता[ऽति]मुग्धा।
तल्पादुदीय च निरस्य च पार्श्वशब्दान्
धत्ते ततः श्रुतिमनल्पकुतूहलाक्षी ॥

१९५२ शशभृन्नवपल्ल[वे] शशाङ्के
मकरन्दस्रुतिचारुणी सरोजे।
अपि चास्य मरुद्गणान् प्रसूते
तिलपुष्पं स्फुटचम्प[कौ]घदाम्नि ॥

—कयोः

१९५३ निधाय पाणौ तिथिपत्रलेखं दैवज्ञवेशश्च विधाय सख्यः ।
चिरेण चन्द्रोदा(द)यकातरायै मुहुः कुहूमेव निवेदयन्ति ॥

—वाणीकण्ठाभर[ण]स्य

१९५४ विरहेण हरेः स्वभाविनीं(?)
तनुतां प्राप तनुस्तथा नताङ्ग्याः ।
मदनेन यथा विनोपनेत्रं
विशिखैः सम्प्रति लक्ष्यते न बेद्धुम् ॥

१९५५ कमले निधाय कमलं कलयन्ती कमलवासिनं कमला ।
कमलयुगादुद्भूतं कमलं कमलेन वारयति ॥

१९५६ तस्याः स्तनान्तरे न्यस्तं चन्दनं तापशोषितम् ।
मनोभवाग्निदग्धस्य वा(ब)भौ(?)भस्मेव चेतसः ॥

१९५७ उद्धूयेत कदाचित्पक्ष्मनिपातोत्थितैः पवनैः ।
इति निर्निमेषमस्या रहसि वयस्या विलोकते वदनम् ॥

१९५८ अर्पयति प्रतिदिवसं
प्रियस्य पथि लोचने बाला ।
विक्षी(क्षि)पति कमलमाला(लां)
कोमलमिव कर्तुमध्वानम् ॥

१९५९ [क]थमपि परिचितमुद्रा भुजमुद्रासङ्गतं स्वप्ने ।
उषसि निमीलितनया(य)[ना] शयनान्तः कान्तमामृशति ॥

—केषाम्

१९६० तापापनोदा(द)दक्षाणि मृणालानि नतभ्रुवः ।
नाभूवन् दीर्घसूत्रेभ्यो वाञ्छित(तं) लभ्यते कुतः ॥

—शकवृद्धेः

१९६१ दुःखानि संदिशन्त्यास्तस्याः कण्ठं मुहुर्मुहुर्बाष्पः ।
स्वल्पावशेषजीवितनिर्वाणभियेव निरुणद्धि ॥

—वाणस्य

१९६२ लतामूले लीनो हरिणपरिहीनो हिमकरः
स्खल[न्]मुक्ताकारा पतति जलधारा कुवलयात् ।
धुनीते बन्धु(बन्धू)कं तिलकुसुमजन्मा हि पवनो
गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥

१९६३ अधिदि(दे)हलि हन्त हेमवल्ली शरदिन्दुः सरसीरुहे शयानः ।
अधिखञ्जनचञ्चु मौक्तिकाली फलितं कस्य सुजन्मनस्तपोभिः ॥

१९६४ लिखति न गणयति रेखा
निर्भरबाष्पाम्बुधौतगण्डतला ।
अवधिदिवसावसानं
मा भूदिति शङ्किता बाला ॥

*विरहिणीप्रलापः*

१९६५ निःश्वासैः सह साम्प्रतं सखि गता वृद्धिं ध्रुवं रात्रयः
सार्द्धं लोचनवारिणा विगलितं तत्प्राक्तनं मे सुखम् ।
प्राणाशा तनुतामुपैति च मुहुर्नूनं ननुस्पर्द्धया
कन्दर्पः परमेक एव विजयी यातेऽपि कान्ते स्थिरः ॥

१९६६ रोलम्बो मधुपः पिकः परभृतो रन्ध्रानुसारी मरुत्
का(की)रो भाषितवाक्यमात्रपठनप्रौढ़ः पयोदो जडः ।
हसः सन्ततपक्षपातनिरतस्तस्या(स्मा)दवस्थामिनां(मां)
वक्तुं कं प्रहिणोमि हन्त कठिनस्वान्ताय कान्ताय मे ॥

१९६७ येन स्वेन करेण शोकदहने संधुक्ष्य काष्ठावलीं
निक्षिप्ता द्विजदम्पती प्रतिदिनं यो वारुणीं सेवते ।

पद्मिन्या विहितं सुवर्णहरिणं(?) गुर्वङ्गनासङ्गमः
संसर्गस्तु कपालिना सखि न किं दोषाकरे दूषणम् ॥

१९६८ आकाशे भ्रमरा भ्रमन्ति शबराः पुष्पस्रजो वागुराः
कुञ्जे किंशुककोरको हुतवहः पापर्द्धिकारः स्मरः ।
जालं दिक्षु सुधांशुकान्तिनिचयः श्येनो वसन्तानिला-
श्चेतो मे हरिणः क्व गच्छतु यतः सर्वत्र वामो विधिः ॥

१९६९ जटेयं नो वेणी कृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिलेखा न कुसुमम् ।
इयं नाङ्गे भूतिर्म[ल]यतरुजन्मा धवलिमा
पुरा[रा]तिभ्रान्त्या कुसुमशर किं मां प्रहरसि ॥

—केषाम्

१९७० गतोऽस्तं घर्मांशु[र्] व्रज सहचरीनीडमधुना
सुखं सुप्या भ्रातः सुजनचरितं वायस कृतम् ।
मयि स्नेहाद् बाष्पस्थगितन[यना]यां गतघृणो
रुदत्यां यो यातस्त्वयि स विलपत्येश्य(ष्य)ति कथम् ॥

—शिवस्वामिनः

१९७१ दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी
सोढव्याः सखि साम्प्रतं कथममी सर्वेऽग्नयो दुःसहाः ॥

—शङ्कुकस्य

१९७२ न गीतिप्रारम्भो न च कलरुतं पञ्चमभृतां
न वा मन्दो वायुर्न च सखी(खि) सुधादीधितिरपि ।
न वा पद्मश्रेणी न च मधुरवाणी लघुलिहां
न वीणा प्रीणाति प्रियसखि मम प्रेयसि गते ॥

—धवलहरिकव्यो।

१६७३ मधुरशिशिरामोदं कौन्दं(?) समीर समीर[य]
प्रकटय शशिन्नाशाकामं मनोभव जृम्भताम् ।
अवधिदिवसः प्राप्तः सख्यो विमुञ्चत तत्कथां
हृदयमधुना किञ्चित् कर्तुं ममान्यदिहेच्छति ॥

—रुद्रस्य

१६७४ अवधिदिवसः प्राप्तश्चायं तनोर्विरहस्य वा
रविरयमुपैत्यस्तं सख्यो ममापि च जीवितम् ।
तदलमफलैराशाबन्धैः प्रसीद नमोऽस्तु ते
हृदय सहसा पाकोत्पीडं विडम्बय दाडिमम् ॥

—क्षेमेश्वरस्य

१६७५ प्रस्थानं वलयैः कृतं प्रियसखी(खै)रस्रैरजस्रं गतं
धृत्या न क्षणम(मा)सितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं न(नि)श्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रियस(सु)हृत्सार्थः किमुत्सृज्यते ॥

—अमरस्य

१६७६ सखि मां नय त्वरितमावृतस्थलीं
विरहानलज्वलितदेहतेजसा ।
स्रवति स्फुटं बहलकौमुदीमिषा-
न्नवनीतपिण्ड इव मण्डलं विधोः ॥

१६७७ आलोको निमी(मि)षविहीनलोचनाना-
[मा]हार्योऽप्युदयति विप्रयोगयोगः ।
अ(आ)जन्मप्रियपरिरम्भसौख्यभाजां
चित्राणामहह महोन्नता तपस्या ॥

—कयोः

१८७८ कालं पुरा रत्नमम्बुनिधेः(?) सकाशाद्
हा हन्त नाम धवलं विषमभ्युदेति।
अद्यादिदं सरिशा यदि हंत ह(ह)त्यात्(?)
कार्ष्ण्यं स्वकण्ठनिहितं सखि मद्धयश्च॥

—उत्प्रेक्षावल्लभस्य

१८७९ ज्योत्स्नां पिबेयुः कियन्तीं चकोराः
किं नात्र धात्रा का(क)रिणो नियुक्ताः।
शीघ्रं यदेषां करपूरणेन
जायेत चन्द्रः प्रभया दरिद्रः॥

—बिल्हणस्य

१८८० तद्भवनं तच्छयनं
तदुपवनं सा निशा स विधुः।
सा(स) पिकः स मलयपवन-
श्चलिते दयि[ते] विषं विश्वम्॥

१८८१ बिभेमि सखि संवीक्ष्य भ्रमरीभूतकीटकम्।
तद्ध्यानादागते पुंस्त्वे तेन सार्धं कुतो रतिः॥

१८८२ याः पश्यन्ति प्रियं स्वप्ने धन्यास्ताः सखि योषितः।
अस्माकं तु गते कान्ते गता निद्राऽपि वैरिणी॥

१८८३ विरमत विरमत सख्यो नलिनीदलतालवृन्तपवनेन।
हृदयगतोऽयं वह्निर्झटित(त) कदाचि[ज्]ज्वलत्येव॥

१८८४ अयि वारय मलयानिलमपसारय चन्दनं त्वरितम्।
योगे पवनेन्धनयोः प्रबलो विरहानलो भविता॥

*आदौ प्रियास्थितौ पृष्टायां लेखहारोक्तिः*

१६८५ कस्मा[त्]त्वं भवदालयादित इतः क्षेमं तवानुग्रहा[द्]
दृष्टा मे सुभगा मया भारतामामसामालोकिता(?) ।
स्वाभानुं विषमेक्षणं विषधरं काकं वराकं गृहे
चन्द्रानङ्गसमीरकोकिलभयाद् व्यग्रा ली(लि)खन्ति(न्ती) मुहुः ॥

१६८६ वार्ता काऽपि न विश्रुता खलु मया भो पंथि(पान्थ)किं कथ्यता-
मेतावत्त[व] वेश्मनः परिसम(ल)रेणागच्छता वीक्षितम् ।
बाष्पव्याकुललोचनाः परिन(ज)नाः पौरा निरुद्धोत्सवा
निःशेषोद्धृतपल्लवाः क्षितिरुहो निःपद्मिनीकं सरः ॥

१६८७ पाणिर्नीरवकङ्कणः स्तनतटी निःकम्पमानांशुका
दृष्टि[र्]निश्चलतारका समभवन्निस्ताण्डवे कुण्डले ।
कश्चित्रार्पितया समं वरतनोर्भेदो भवेन्नो यदि
त्वन्नामस्मरणेन कोऽपि पुलकारम्भः समुज्जृम्भते ॥

१६८८ कार्श्यं चेत्प्रतिपत्कला हिमरुचः स्थ(स्थू)लैव चेत् पाण्डिमा
श्यामैवास्ति मृणालिका यदि पुनर्बाष्पः कियानम्बुधिः ।
तापश्चेदनुमीयते हुतवहः शीतस्तदेणीदृश-
स्त्वन्नामस्मरणामृतैकशरणं लावण्यशेषं वपुः ॥

१६८९ अगारे सर्वस्मिनारिशम(?)निशानाथशकलं
भुजङ्गानुत्त(त्तु)ङ्गानपि सकलवातायनतले ।
निकुञ्जेषु श्येनानधिशिरगृहे(?)शिरोराहुनिकरं
लिखन्त्या नीयन्ते शिव शिव तया हन्त दिवसाः ॥

१६९० तन्वङ्ग्यास्त्वमिति प्रसादविशदं नासीति खेदालसं
चक्षुर्द्वारपथावतारिणी(णि) जने व्यापारयन्त्या मुहुः ।
हर्षार्त्तिप्रभवाः प्रतिक्षणभुवः स्वेदाम्बुदाहोत्तरे
नेत्राम्भःकणिकाः पयोधरतटे पुष्यन्ति शुष्यन्ति च ॥

१९९१ तस्यास्तापमहं नृशंस कथयाम्येणीदृशस्ते कथं
पद्मिन्या सरसं दलं विनिहितं तस्याः समायोरसि ।
आदौ शुष्यति सङ्कुचत्यतनुतश्चूर्णत्वमापद्यते
पश्चा[न्]मुर्मुरतां दधद् दहति च श्वासावधूतं सखीः ॥

१९९२ द्वारस्तम्भनिषण्णया मलिनया वक्रीकृतग्रीवया
नासाग्रोद्गत(?)बाष्पबिन्दुविसरैः संसिच्यमानाङ्गया ।
मन्युस्तस्ति(म्भि)तकण्ठगद्गदगिरा प्रोच्चारिताद्धाक्षरं
सन्दिष्टं तव कान्तया पथिक हे वक्तुं न तत्पार्यते ॥

१९९३ उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकान[न]माविशन्ति वलयक्वाणैः समुत्त्रासय ।
इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठीषु सांकेतिक-
व्याहाराः सुभग त्वदीयविरहे तस्याः सखीनां मिथः ॥

१९९४ मुहुर्व्यजनवीजनैर्बहलचन्दनासेचनैः
सरोजदलवेष्टनैरपि न चेष्टते सुन्दरी ।
परन्तु तव नामनि प्रियसखीभिरावेदिते
निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः ॥

१९९५ उदञ्चय दृगञ्चलं रचय मङ्गलं सर्वत-
श्चिराय शमुपागतः पुरत एष ते वल्लभः ।
इति प्रियगिरा श्रुती पुलकदन्तुरे कुर्वती
प्रकाशयति नो दृशौ प्रियसखी मृषाशङ्कया ॥

१९९६ क्वचिन्मिलति मालतीसुरभिरेष पम्पानिलः
क्वचि[त्]क्वणति कीर मण्डुता पुंस्कोकिलः(?) ।
क्वचिद् भ्रमरझङ्कृतिः क्वचन चन्द्रिकाहुङ्कृतिः
क्व हस्तमवलम्बयेद्वरतनोर्विविग्नं मनः ॥

१९९७ त्वद्देशागतमारुतेन मृदुना सञ्जातरोमाञ्चया
त्वद्रूपाङ्कितचारुचित्रफलके निर्वापयन्त्या दृशम् ।
त्वन्नागा(मा)मृतसिक्तकर्णपुटया त्वन्मार्गवातायने
नीचैः पञ्चमगीतिगर्भितगिरा नक्तंदिनं स्थीयते ॥

१९९८ लास्यं पांशु(सु)कणायते नयनयोः शल्यं श्रुतेर्वल्लकी
नाराचाः कुचयोः सचन्दनरसाः कर्पूरवारिच्छटाः ।
तस्याः काप्यरविन्दसुन्दरदृशः सा नाज(म?)मन्ये दशा
प्राणत्राणनी(नि)बन्धनं तव कथा [य?]स्यामभूत्केवलम् ॥

१९९९ कर्पूराम्बुनिशेच(षेक?)भाजी(जि) सरसैरम्भोजिनीनां दलै-
रास्तीर्णै[र]पि वर्त्तमानवपुषः स्रस्तस्रजि स्रस्तरे ।
मन्दोन्मेषदृशः किमन्यदभवत्सा काऽप्यवस्था पुन[र्]
यस्यां चन्दनचन्द्रपङ्कजन[ल]श्रेण्यादि वह्नीयते ॥

—त्रिविक्रमभट्टस्यैते

२००० दृष्टे चन्द्रमसि प्रलूनतमसि व्योमाङ्गणस्थेयसि
स्फूर्ज[न्]निर्मलतेजसि त्वयि गते दूरं निजप्रेयसि ।
स्वोरः कैरवकोरकीयति मुखं तस्याः सरोजीयति
क्षीरोदीयति मन्मथो मृगदृशो दृक् चन्द्रकान्तीयति ॥

—भल्लटस्य

२००१ गलत्येका मूर्च्छा भवति पुनरन्या यदनयोः
किमप्यासि(सी)न्मध्यं सुभग निखिलायामपि निशि ।
[लिखन्त्यास्तत्तस्याः कुसुमशरलेखं तव कृते
समाप्तिं स्वस्तीति प्रथमपदभागोपि न गतः ॥]

२००२ ..........................................
..........................................।

इत्यालोच्य तया चलद्वदनया तिर्यक्पतन्नेत्रया
दूरोत्सारितहस्तया तव सखे लीलालता सिच्यते ॥

—रत्नभद्रस्य

२००३ सोमः सूरति चन्द्रकं दहनति प्राणो हि फूत्कारती(ति)
श्रीखण्डं ज्वरति प्रियं गरलति स्थानं परद्वीपति ।
पद्मं पन्नगति स्वयं विकलति व्योमीयतीदं जगत्
कामः कालति कामकान्तविरहे हा हे नताङ्ग्यास्तव ॥

२००४ भ्रमति परी(रि)तो दीर्घोच्छ्वासं विमुञ्चति मञ्चकिं(कं?)
प[त]ति सहसोत्तिष्ठत्यङ्गाङ्गणं प्रति गच्छति ।
लिखति धरणीं बाष्पश्रेणीं प्रसारयति क्षणं
मदनदहनज्वालाजालाकुला कुवलेक्षणा ॥

—हरिकवेर्मम

२००५ यावद् यावद् भवति कलया मांसलोऽयं शशाङ्क-
स्तावत्तावद् द्युतिमयतनुः क्षीयते सा मृगाक्षी ।
मन्ये धाता घटयति विधुं सारमाकृष्य तस्या[स्]
तस्माद् यावत्सुभग न भवेत्पूर्णिमा तावदेहि ॥

२००६ स्मरदवथुनिमित्तं गूढमुन्नेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः ।
वदति विन[त]पृष्ठोदस्तपीनस्तनाग्रा
बत वलयितबाहु[र्] जृम्भ(म्भि)तैः साङ्गभङ्गैः ॥

—कयोः

२००७ सहदिहरनिसाइं दीहरा सासदंडा
सह मणिक(व)लयेहिं बाहमा(धा)रा गलंदी ।

सुहयतु यदि योये तीय उज्जुंबरीये
सह य तनुलदाये दुच्छ(व्व)ला जीविदासा ॥

—राज०

२००८ क्षणं पटीरे क्षणमब्जतल्पे
क्षणं सखीवक्षसि शायितायाः ।
क्षणकसम्भावितजीवितायाः
को वेद किं स्या[त्] कमलेक्षणायाः ॥

२००९ तव विरहमसहमाना प्राणानबला विमुक्तवती ।
किन्तु तथाविधमङ्गमसुलभमिति ते न मुञ्चन्ति ॥

२०१० कुतस्तव गृहादेव भव्यं भवदनुग्रहात् ।
क उदन्तश्चतुर्दिक्षु नगा नलिननिर्मिताः ॥

२०११ परिमृदितमृणालीम्लानमङ्गप्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्री(क्रि)यासु ।
कलयति च हिमांशो[र्]निःकलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदगौरः कपोलः ॥

—भवभूतेः

२०१२ मदकलकलकण्ठकण्ठनाद-
व्यतिकरभैरवदिङ्मुखानि तन्वी ।
कथमिव गमयेद् विभिन्नमल्ली-
परिमलकञ्चुकितानि वासराणि ॥

—तरुणबाणस्य

२०१३ विवृद्धतापोपशमार्थमङ्गे न्यस्तं यदिन्दीवरदाम तस्याः ।
मुक्तेषुणा पञ्चशरेण भाति व्यापरी(पारि)तं धौतनिवासि सूत्रम् ॥

—वेदगुप्तस्य

२०१४ त्वां चित्ता(न्ता)परिकल्पितं सुभग सा सम्भाव्य रोमाञ्चिता
शून्यालिङ्गनसञ्चलद्भुजयुगेनात्मानमालिङ्गति ।
किञ्चान्यद् विरहव्यथाप्रशमनीं सम्प्राप्य मूर्च्छां चिरा[त्]
प्रत्युज्जीवति कर्णमूलपठितैस्त(स्त्व)न्नाममन्त्राक्षरैः ॥

२०१५ सम्प्राप्तेऽवधिवासरे क्षणमनु त्वद्धर्म(र्म्य)वातायनं
वारं वारमुपेत्य निःकृपतया निश्चित्य किं[चि]च्चिरम् ।
सम्प्रत्येव निवेद्य केलिकुररी साम्रं सखिभ्यः शिशो-
र्माधव्याः सहकारकेण करुणः पाणिग्रहो निर्मितः ॥

पत्रलेखः

२०१६ कुलीन स्वाधीन भ्रमणपरिहीन प्रियतम
क्षमासिन्धो साध्वीशरण करुणाभाजन विभो ।
अपीदानीमस्याः कुरु करुणमिन्दीवरदृशो
दशेयं प्राणेश क्षणमपि विलम्बं न सहते ॥

—कस्याः

२०१७ प्राणेश विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः ।
सम्प्रत्ययोग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥

—उत्प्रेक्षाव[ल्ल]भस्य

२०१८ अनलस्तम्भनविद्यां सुभग भवानेव जानाति ।
मन्मथदवाग्नितप्ते हृदि मे कथमन्यथा वसति ॥

२०१९ धवलो सि जइ वि सुन्दर तह वि तुए मम रंजी(जि)अं हि[अ]अं ।
अणुरज्जे(त्ते)वि अ हिअये सुहय निहित्तो ण रत्तो सि ॥

—कयोः

*अथ विरहिणोऽवस्थाख्यानम्*

२०२० कुटीरे कस्मिंश्चित् कमपि रसमाधाय निभृतं
श्वसन्मन्दं मन्दं पुलकमनुवेलं विकरति ।
अथाद्वैतोद्बोधादपलपितबाह्येन्द्रियगणो
वियोगी योगीव प्रतिदिवसमेवं गमयति ॥

—लक्ष्मणठक्कुरस्य

२०२१ देशैरन्तरिता शतैश्च सरितामुर्वीरुहां काननै-
र्यत्नेनापि च याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणार्द्धरुद्धवसुधः प्रोन्मृज्य सास्रे दृशौ
तामाशां पथिकस्तथापि किमपि ध्यायन्मुहुर्वीक्षते ॥

—अम०

२०२२ सा तन्वीति घनस्तनी[ति] विकसन्नीलाब्जनेत्रेति च
स्वैरं सञ्चर(र)तीति वक्ति मधुरां वाचं विचित्रामपि ।
इत्थं विद्रुमपाटलाधरपुटां सीमन्तिनीं ध्यायतो
रोमाञ्चो रुदितं स्मितं प्रलपितं पान्थस्य सञ्जायते ॥

२०२३ वसन्तप्रारम्भे चिरविरहखिन्ना सहचरी
यदि प्राणान् मुञ्चेत्तदिह वधभागी भवति कः ।
वयो वा स्नेहो[वा] कुसुमविशिखो वेति विमृशन्
तुही वेति व्यक्तं पिकनिकरभङ्कारमशृणोत् ॥

*विरहिप्रलापः*

२०२४ पिकाली वाचालीभवतु सततालीकवचने
मृणाली व्यालीव व्यथयतुतरामङ्गमनिशम् ।
विषज्वालाजालं किरतु मयि तावच्छशधरो
जगत्प्राणः प्राणानपहरति केयं परिणतिः ॥

२०२५ रे सारङ्गाः कृतकविधयस्तत्त्व(स्तत्त्व)माख्यात यूयं
कुत्राधीतं त्रिभुवनमनोहारि चाञ्चल्यमक्ष्णोः ।
आं जानीमो गमनसमये नीपकान्तारसीम-
न्येकाकिन्याः कुवलयदृशो लुण्ठिता लोचनश्रीः ॥

२०२६ तीर्णा बाष्पपरम्परैव सरितामुल्लङ्घने कः श्रमः
श्वासा ए[व] मृगीदृशो न गणी(णि)ताः के नाम झंझानिलाः ।
सोढाः कातरदृष्टिरेव कियतीवाज्ञाभिघातव्यथा
प्रेमैवायमुपेक्षितो ननु सखे प्राणेषु कोऽनुग्रहः ॥

२०२७ आयान्ती लसदङ्गुलीयकहरिन्माणिक्यरश्मिच्छटा
दूर्वाचर्वणजातकौतुकमृगीतोकानुकम्पाकुला ।
मन्दस्मेरमु(मु)खाब्जमुग्धमधुकृज्जम्बूफलाकर्षिणा
खेलन्ती मणिबन्धकीरशिशुना कान्ता कदा दृश्यते ॥

२०२८ सौमित्रे किमु मृग्यते प्रतिलताकुञ्जं चकोरेक्षणा
नैतस्मिन् विपिने कदाचिदपि सा जाति(ता)तिथि[र्]मैथिली ।
पर्णी नी(नि)स्त्रपमीक्षते मधुकरश्रेणी समुज्जृम्भते
निःशङ्कं चमरी चरत्यपि निरातङ्कं पिकी गायति ॥

२०२९ ज्योत्स्नां श्यामली(लि)मानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥

—केषाम्

२०३० जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः ।
[तां] यावत् परिरभ्य चाट(टु)कशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥

—निद्रादरिद्रस्य

२०३१ विलीयेन्दुःसाक्षादमृतमयपाथो यदि भवेत्
कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् ।
ततः स्नानक्रीडाजनितजडभावैरवयवैः
कदाचिन्मुञ्चेयं मदनशिखिपीडापरिभवम् ॥

—राज०

२०३२ शीतांशोरमृतच्छटा यदि कराः कस्मान् मनो मे भृशं
सम्प्लुष्यन्त्यथ कालकूटपटलीसंवाससंदूषिताः ।
किं प्राणान्न हरन्त्युत प्रियतमासञ्जल्पमन्त्राक्षरा
रक्षन्ते किमु मोहमेमि हहहा नो वेद्मि केयं गतिः ॥

—अभिनवगुप्तस्य

२०३३ प्रालेयाद्रिस्त्वरितम(मु)रसि क्षिप्यतां शैत्यहेतो-
रास्तां यद् वा स खलु निखिलःस्या[द् ]द्वितीयाश्मशेषः ।
त्यल्का(क्त्वा) क्षारं जलनिधिजलं जाह्नवीतोयपूर्णा-
स्तूर्णं गात्रे मम जलमुचः कञ्चुकत्वं प्रयान्तु ॥

२०३४ घर्मांशुर्भगवानसु(सू )त यमुनां ताप्यो(?)क्तं गङ्गया
पाथोऽस्याः क्वथितं पुरारिमुकुटे नेत्रानलज्वालया ।
स्पन्दैश्चन्दनशाखिनां शतमुखै[ः] किर्मीरनीरोर्मयः
सेव्यै मलयाचलेन्द्रसरितः सम्भूय तिष्ठन्तु मे ॥

—बिल्ह०

२०३५ दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥

—भवभू०

२०३६ मृणालीहारोऽयं न भुजगपतिश्चन्दनरजो
न भस्मेदं कण्ठे कुवलयदलाली न गरलम् ।

सिताम्भोजं पाणौ लसति न कपोलं मयि मुधा
पुरारातिक्रोधात् स्मर किमनभिज्ञ प्रहरसि ॥

—उमापतिधरस्य

२०३७ हृदि बिसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ॥
मलन(य)जरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्याऽनङ्ग क्रुधा किमु धावसि ॥

—जयदेवस्य

२०३८ पञ्चत्वं तनुरेतु भूतनिवहः स्वं स्वं विशत्वालयं
याचे त्वां द्रुहिण प्रणम्य शिरसा भूयोऽपि भूयान्मम ।
तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयाल[य]-
व्योम्नि व्योम तदीयवर्त्सं(र्त्म)सु धरा तत्तालवृन्तेऽनिलः ॥

—अकापौलेः(आकाशपालेः?)

२०३९ आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ।
अन्तर्मे दयितामुखं शशिनिभं वृत्तिः समैवावयो-
स्तत्किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यतः ॥

—यशोवर्मणः

२०४० भ्रमय जलदानम्भोगर्भान्प्रमोदय चातकान्
कलय शिखिनः केकोत्कण्ठान् कठोरय केतकान् ।
विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथा-
मकरुण विधे संज्ञाव्याधिं विधाय किमीहसे ॥

—भवभू०

२०४१ तप्ते महाविरहवह्निशिखावलीभि-
रापाण्डुरस्तनतटे हृदये प्रियायाः ।

मन्म(न्मा)र्गवीक्षणनिवेशनदीनदृष्टे-
र्नूनं छमिच्छमिति बाष्पकणाः पतन्ति ॥

—छमिच्छमिकारत्नस्य

२०४२ हे यामिनीश जडिमा कतमस्तवैष
संघर्षमाह्वयसि येन मुखेन तस्याः ।
त्वं वह्निमुद्गिरसि तद्विरहे करोति
पीयूषवर्षमिह तद्भवता विनाऽपि ॥

—पीयूषवर्षस्य

२०४३ गभस्तिमानस्तगिरिं प्रयातो
न क्वापि शातोदरि लक्षिताऽसि ।
इतीरयन्निर्गतबाष्पधारो
निःश्वस्य हा रोदिति रामचन्द्रः ॥

—वाणि(णी)कण्ठाभरणस्य

२०४४ तद्विश्लेषावधि पर(रि)चिता चन्द्रिका चन्दनानां
जातः शातोदरि परिचयः शीलितं शीलमिन्दोः ।
आस्तामन्यच्चिरसहचरी भाविता स्वप्नसिद्ध्यै
निद्रा साऽपि त्वमिव कठिने दुर्लभा लोचनस्य ॥

२०४५ अपसरति न चक्षुषो मृगाक्षी
रजनिरियं न च याति नैव(ति)निद्रा ।
प्रहरति मदनोऽपि दुःखितानां
बत बहुशोऽभिमुखीभवन्त्यपायाः ॥

—त्रिविक्रमस्य

२०४६ दिव्यचक्षुरहं जातः सरागेणापि चक्षुषा ।
इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥

—धैर्यमिश्रस्य

२०४७ स्वयमप्राप्तदुःखो यः स दुनोति न विस्मयः ।
त्वं स्मर प्राप्तदाहोऽपि दहसीति किमुच्यते ॥

२०४८ हारो नारोपितः कण्ठे मया विश्लेषभीरुणा ।
इदानीमन्तरे जाताः पर्वताः [सरितो द्रुमाः] ॥



## सुभाषितहारावलीगतकविपरिचयः

**१. अकबरीकालिदासः १५, १२४, २७३, २७४**

यथासम्भवं मुगलपादशाहस्य अकबरस्य (१५५६-१६०५ ख्री०) समकालिकः कविः। अनेन विरचितं 'रामचन्द्रयशःप्रबन्ध' इत्याख्यं काव्यं डॉ० जे० बी० चौधुरीमहाशयैः सम्पाद्य प्रकाशितम् (प्राच्यवाणी, कलकत्ता, १९४६ ख्री०)। ग्रन्थस्य पुष्पिकया गोविन्दभट्ट इति तदीयं मूलं नाम विदितं भवति। पद्यरचनादिष्वर्वाचीनेषु सुभाषितसंग्रहेषु कवेरस्य पद्यानि लभ्यन्ते। वघेलनृपते रामचन्द्रस्य (१५५५-९२ ख्री०) यशोगानरूपं काव्यमस्य वघेलविरुदमिति नाम्ना लब्धमस्माभिः। १५८० ख्रीस्तीयाब्दकालः कवेरस्य काव्यनिर्माणस्येति साधितं चौधुरीमहाशयैः।

**२. अन्तदेवः ३९७**

नास्ति विदितः।

**३. अभिनन्दनः ७०**

अभिनन्द इति नाम्ना कविद्वयं लभ्यते। एकः कश्मीराभिजनः कादम्बरीकथासारस्य रचयिता राजशेखरस्य समकालिकः, अपरः रामचरितस्य रचयिता। यदि चेदेताभ्यां कश्चिद् भिन्न एवायमिति चेत्स नास्ति विदितः।

**४. अभिनवगुप्तः २०३२**

काश्मीरकः, नाट्यशास्त्रस्य व्याख्याता सुप्रसिद्ध आचार्यः।

**५. अमरः १५८०, १५८८, १५९३, १६२०, १६४५, १६६४, १७०५, १७१४, १७२४, १७३०, १७५२, ११७५**

अमरदत्तः, अमरसिंहश्चेति कौचन कोषकारौ निर्दिष्टौ। परमयं कश्चन ताभ्यां भिन्न एव स्यात्।

**६. अमरुकः १८४४, १९१४, १९४८, २०२१**

अमरुकशतकस्य रचयिता सुप्रसिद्धः कविः। ध्वन्यालोके, वामनप्रणीते चालङ्कारग्रन्थे निर्देशात् ७५० ख्रीस्ताब्दीयः सिध्यति।

७. अर्गटः ४६०

नास्ति विदितः।

८. अर्जुनवर्मदेवः ४२५

अमरुकशतकस्य प्रसिद्धाया रसिकसञ्जीविनीसमाख्याया व्याख्यायाः कर्ता मालवाधिपतेर्भोजनृपस्य वंशयः सुभटवर्मसूनुः। ख्रीस्ताब्दीयत्रयोदशशतकस्य पूर्वार्धकालवर्ती।

९. अरसीठक्कुरः ६१९, १७०६

नास्ति विदितः। सम्भवतोऽरिसिंहः। ख्री०त्रयोदशशताब्दीकः।

१०. आकाशपालिः १७७०, २०३८

आकाशपोलिः इत्यपि लभ्यते। गदाधरस्य रसिकजीवने समुद्धृतः।

११. आदित्यभट्टः ७७२

नास्ति विदितः।

१२. आनन्दवर्धनः ८३, १३५

ध्वन्यालोकस्य कर्ता कश्मीराभिजनोः ख्री०नवमशताब्दयामुत्पन्नः। कश्मीरनृपतेरवन्तिवर्मणः सभापण्डितः। विषमबाणलीला, अर्जुनचरितञ्चेति स्वकाव्यद्वयमनेन ध्वन्यालोके निर्दिष्टम्। अनेन देवीशतकं नाम काव्यं व्यरचीत्यप्युच्यते।

१३. इन्द्रकविः १०, १८, १९

नास्ति विदितः।

१४. ईश्वरपुरी २००

शङ्करमतानुगः संन्यासी, गयायां श्रीचैतन्यदेवस्य मन्त्रदीक्षादाता।

१५. उत्कलः १७१

नास्ति विदितः।

१६. उत्प्रेक्षावल्लभः १६६१, १७१७, १९७८, २०१७

भिक्षाटनकाव्यस्य रचयिता, परमत्रोद्धृतं किमपि पद्यं भिक्षाटनकाव्ये नोपलभ्यते।

१७. उमापतिधरः ३६३, २०३६

राज्ञो लक्ष्मणसेनस्य (ख्री०द्वादश-त्रयोदशशतकवर्तिनः सभाकविः, गीतगोविन्दकर्त्रा श्रीजयदेवेन निर्दिष्टः। प्रबन्धचिन्तामणौ मेरुतुङ्गः कवेरस्य लक्ष्मणसेनसचिवरूपेण स्मरति।

कवेरस्य काचन कृतिर्नैव निर्दिष्टा, तथापि सुभाषितसङ्ग्रहेष्वस्य बहूनि पद्यान्युद्धृतानि लभ्यन्ते।

१८. कण्टकोद्धारः ३३१, ३३२

नास्ति विदितः।

१९. कपोलकविः १६०८

नास्ति विदितः।

२०. कमलाकरशेषः १३०

नास्ति विदितः।

२१. कविचूडामणिः ४००

नास्ति विदितः। कस्यचित् कवेरुपनाम भवितुमर्हति।

२२. कविरत्नः १६४, १७६, १७७, १५९२, १६७७, १७०७

अनेके कविरत्ननामधेयाः कवयो लभ्यन्ते, किन्तु कोऽयमिति नास्ति विदितः।

२३. कामन्दकः

नीतिशास्त्रस्य कर्ता। खी०तृतीयशताब्दीक इति सामान्यतः स्वीक्रियते।

२४. कालिदासः ९१, २६८, ३१९, ३४५, १५७९, १६१८, १७५०

रघुवंशादीनां काव्यानां कर्ता कविकुलगुरुः। खीस्तीयचतुर्थशताब्द्यामुत्पन्नः। कतिचन पद्यानि भिन्नस्यैव कस्यचित् कालिदासस्य सन्तीति प्रतीयते।

२५. कुमारदासः १६६३, १७०३, १७२१

जानकीहरणाख्यमहाकाव्यस्य रचयिता। कालिदासस्य मित्रमित्यपि कथ्यते। सिंहलपरम्परानुसारं सिंहलनृपतेः (खी० ५१७-२६) अभिन्नः स्वीक्रियते। सिंहलभाषायां जानकीहरणस्याक्षरशोऽनुवाद उपलभ्यते।

२६. कूर्मवाराहः ९२

नास्ति विदितः।

२७. कृष्णपण्डितः १२७, ४०२-४०४, ४६२

शिववीरमहोदयसुतस्य सम्भाजीमहोदयस्य गुरुः, शम्भुराजचरिताख्यमहाकाव्यस्य लेखने सु०हारावल्याः कर्तुः श्रीहरिकवेः प्रवर्तकः।

२८. कृष्णभट्टः ३१७, १५८६

नास्ति विदितः ।

२९. कृष्णमिश्रः ८१४, १०५४

प्रबोधचन्द्रोदयस्य नाटकस्य प्रसिद्धो रचयिता । ख्री०एकादशशताब्द्या अन्ते समुत्पन्नः ।

३०. कोकपण्डितः ९२३

रतिरहस्याख्यस्य कोकशास्त्रस्य कर्ता । त्रयोदशशताब्द्यामुत्पन्नः ।

३१. क्रमदीपिकाकृत् ७३

केशवकृता, नित्यानन्दकृता च लभ्यते । कोऽयं क्रमदीपिकाकृदिति चिन्त्यम् ।

३२. क्षेमसिंहाचार्यः ९७६

नास्ति विदितः ।

३३. क्षेमेन्द्रः ११९, ३६४, ३६५, ४८६, ८१८, ८३१, ८६५, ८७२, ८९७, ९२४-९२८, ९७५, ९८९, १०३९, १०४६, १२४१-१२६५

भारतमञ्जर्याद्यनेकेषां ग्रन्थानां निर्माता व्यासदासोपनामा कश्मीराभिजनः ख्री० एकादशशताब्द्यामुत्पन्नः । औचित्यविचारचर्चायाः प्रणयनेन काव्यालोचकाचार्येषु, औचित्य-सिद्धान्तस्य प्रवर्तक इति ख्यातः ।

३४. क्षेमेश्वरः

राजशेखरस्य समसामायिकः ।

३५. खञ्जनकविः १४०७, १४०८

अविदितः ।

३६. खोखटभट्टः १०००

अविदितः ।

३७. गणपतिः ११८

कविरयं भानुकरस्य पिता स्यात् । स गणेश्वर इत्यप्यभिहितः ख्री०षोडश-शताब्द्यामुत्पन्नः ।

३८. गदाधरचरणाः २००९-१०११

गदाधरनामानोऽनेके सन्ति । कश्चिदायुर्वेदग्रन्थानां रचयिता । कश्चिद् 'रसिकजीवनस्य'

लेखकः। श्रीहरिकविना 'चरण'शब्दसंयोजनपूर्वमस्योल्लेखात्कश्चन तत्समकालवर्ती तदनधिक-पूर्ववर्ती वा भिन्न एव गदाधरो भवेदयम्।

३९. गद्यपद्यः ११४

अविदितः।

४०. गङ्गेश्वरोपाध्यायः २०

कविरयं नव्यन्यायस्य प्रवर्तको गङ्गेशोपाध्यायो भवितुमर्हति। इदं नाम रामकान्त-विद्यावागीशस्य शब्दरहस्ये उद्धृतम्।

४१. गोपीनाथपण्डितः १८१, २५०, २६२

नास्ति विदितः।

४२. गोवर्द्धनः १४१३

गीतगोविन्दकर्तुः श्रीजयदेवस्य समकालिकः, आर्यासप्तशतीकारः। खीस्तीयद्वादश-शताब्दीकः वङ्गशासकस्य लक्ष्मणसेनस्य सभाकविः।

४३. गोत्रानन्दः १६३३, १७४०

नास्ति विदितः।

४४. चक्रपाणिः ३७, १२५, ३२६

हरिकवेः सु० हारावलीकारस्यानुजः।

४५. चन्द्रचूडः ५५

पुरुषोत्तमभट्टस्य अम्बिकादेव्याश्च तनयः, पद्यवेण्यादावुद्धृतः।

४६. चन्द्रदेवः ३२१

गदाधरेण स्वरसिकजीवने समुद्धृतः।

४७. चाटेश्वरः १७५८

नास्ति विदितः।

४८. चाणक्यः ३९०, ८४१

चन्द्रगुप्तमौर्यस्य मन्त्री।

४९. छमिच्छमिकारत्नः २०४१

नास्ति विदितः।

५०. छित्तिपः ३६६

धारनृपतेर्भोजराजस्य सभाकविः खी०दशमशताब्दीकः।

५१. जगन्नाथः (पण्डितराजः) ३२६, ४२६, ४३०, ८६३, ८६४, १५४५

भामिनीविलास-रसगङ्गाधरादीनां कर्तृत्वेन प्रसिद्धः, शाहजहानस्य सभाकविः खी० सप्तदशशताब्दीकः।

५२. जघनस्थलीघटकः १७१६

अगंटकवेः उपनाम।

५३. जनार्दनभट्टः १००१

नास्ति विदितः।

५४. जयदेवः (गीतगोविन्दकृत्)

लक्ष्मणसेनस्य बंगनृपतेः (खी० ११८५-१२०५) सभाकविः।

५५. जयन्तः १८६२

नास्ति विदितः।

५६. जयमाधवः ४१६

नास्ति विदितः।

५७. ज्ञानाङ्कुरः ६७८, ६७६

नास्ति विदितः।

५८. डिण्डिमकविः १६३४, १६८३, १७१२

नास्ति विदितः।

५६. तरुणवाणः २०१२

नास्ति विदितः।

६०. त्रिलोचनः ३३५, ४३४, ४६६

राजशेखरः कमपि पार्थविजयस्य कर्तारं त्रिलोचनं प्रशंसति (सूक्तिमुक्तावली ४.१७)।

६१. त्रिविक्रमः ३१६, ४९३, १६०७, १७८३, १९९७-९९, २०५४

नलचम्पूकारः, खी०दशमशताब्दीकः।

६२. दक्षिणायनः १५६

नास्ति विदितः।

**६३. दण्डी १६१५**

दशकुमारचरितस्य काव्यादर्शस्य च कर्ता, सम्भवतः खी०षष्ठशताब्दीकः ।

**६४. दम्पती १४८३**

न स्तो विदितौ ।

**६५. देवबोधिः १७३८**

नास्ति विदितः ।

**६६. देवेश्वरः ४३२, ५०५**

वाग्भटस्य पुत्रः, मालवनृपतेः सचिवः । कविकल्पलतायाः काव्यकलापस्य च लेखकः ।

**६७. दोर्लन्तिकाभीमः १६२४**

नास्ति विदितः । कविरयं भीमभट्टः भीमट इति वा सम्भवितुमर्हति । खी०त्रयोदश-शताब्द्या मध्ये ततोऽपि पूर्वमस्य समयः स्यात् ।

**६८. धनदः ३००, ४३१, ४६५ ७९२, ७९३, १६३६**

नास्ति विदितः ।

**६९. धनञ्जयः ३३४**

नास्ति विदितः ।

**७०. धनपालः ६३, १०६, ३४७**

नास्ति विदितः ।

**७१. धर्माशोकः ४१०, ४११**

नाम्ना बौद्ध इव प्रतीयते । परं सुभाषितरत्नकोशे शिवस्तुतिपरमस्य पद्यमुपलभ्यते ।

**७२. धवलः १६७२ (धवलहरिकव्योः)**

नास्ति विदितः ।

**७३. धैर्यमिश्रः २०४६**

नास्ति विदितः ।

**७४. नन्दपण्डितः १००८**

नास्ति विदितः । खीस्तीयषोडशशताब्द्यामुत्पन्नः, सम्भवतो रामपण्डितस्य सुतः । श्रीदेवस्य कश्चन सुतोऽप्यासीदेतन्नामा ।

**७५. नाचिराजः १६६२**

कर्णाटकवास्तव्यः, जैनः, दाहलनृपते कर्णस्य सभायामासीत् ।

**७६. निद्रादरिद्रः २०३०**

नेदं कवेर्मूलं नामेति प्रतिभाति ।

**७७. पीयूषवर्षः २०४२**

एकादशशताब्दीकः । गीतगोविन्दकाराद् पक्षधरमिश्राच्च भिन्नो जयदेवापरामिधः ।

**७८. पुनरुपण्डितः ७३२**

नास्ति विदितः । पुनरुक्तपदपण्डितेतिनाम्ना जल्हणस्य सूक्तिमुक्तावल्यां पद्यमिदं लभ्यते ।

**७९. पुलिन्दः ३२०**

नास्ति विदितः ।

**८०. पुष्कराक्षः १८६३**

नास्ति विदितः । कश्चित्कृष्णभक्तः । पञ्चदशखीस्ताब्द्या अन्ते षोडशखिस्ताब्द्या वाऽऽरम्भे उत्पन्न इति स्टर्नवाखमहोदयाः ।

**८१. पुष्टिङ्कुरः १९३२**

नास्ति विदितः । पुष्टिक इत्यपि निर्दिश्यते । त्रयोदशखीस्तीयाब्द्या मध्ये ततोऽपि पूर्वं वा भवेदिति स्टर्नवाखमहोदयाः ।

**८२. बहिलः ९९६**

अविदितः ।

**८३. बाणः**

हर्षचरितकादम्बर्योः सुप्रसिद्धो रचयिता खीस्तीयसप्तमशताब्द्यामुत्पन्नः, श्रीहर्षवर्धनस्य सभाकविः ।

**८४. बालसरस्वती ५०, ११२**

अविदितः । अर्जुनमंदेवः अमरुकशतकस्य निजनिर्मितटीकायां 'यदुक्तमुपाध्यायेन बालसरस्वत्यपरनाम्ना मदनेने'ति निर्दिशति ।

**८५. बिल्हणः** ३०४, ३२५, ४१७, ४६७, ४७०, ४७२, १५८१, १५९४, १६०५, १६९९, १७०९, १७२६, १७२९, १७४४, १७८४, १८१२, १९७९, २०३४ ।

ज्येष्ठकलशान्नागदेव्यामुत्पन्नः, कश्मीरवास्तव्यः, विक्रमाङ्कदेवचरितमहाकाव्यस्य चौरपञ्चाशिकायाः कर्णसुन्दरीनाटिकायाश्च लेखकः । खीस्तीयैकादशशताब्द्या उत्तरार्धे चालुक्यनृपतेर्विक्रमादित्यषष्ठस्य त्रिभुवनमल्लस्य सभाकविः ।

**८६. बोधिसत्त्वः ९८१, ९८२**

नास्ति विदितः ।

**८७. बोपदेवपाण्डितः ३२२**

अविदितः ।

**८८. भगवद्व्यासचरणः ०५, ७०६, ८९९, ९५३, ९५४, ९८०, ९९२, ९९८, १०३७, १०५०-५३, १४५६ ।**

पुराणादीनां प्रसिद्धः कर्ता ।

**८९. भदन्तकुमारः ७६८**

अविदितः ।

**९०. भर्तृहरिः २६६, २८८, ३०३, ३०५, ३७८, ३८२, ४७४, ४८५, ५०६, ६९८, ६९९, ८३३, ८४६, ८६१, ८६६, ९४५-९५२, ९९३, १०३८, १०४४, १३८२, १५५९, १५६४, १७४९, १७६३**

नीतिशतकस्य, शृङ्गारशतकस्य, वैराग्यशतकस्य कर्तृत्वेन प्रसिद्धः । एतेषु शतकेषु विभिन्नग्रन्थानामपि पद्यानि लभ्यन्ते । सुभाषितग्रन्थेषु लब्धान्यनेकानि शतकत्रयपद्यानि विभिन्नरचयितृनामनिर्देशपूर्वकमुपलभ्यन्ते । अनेन तेषां कालानुक्रमः स्थापयितुं महत्काठिन्यमनुभूयते विद्वद्भिः । परम्परया शतकत्रयस्य कर्ता भर्तृहरिरेक एवावगम्यते । इत्सिंगमहोदयस्य सूचनानुसारं ६५१ तमे खीस्तीयाब्दे वाक्यपदीयकर्तुर्वैयाकरणस्य भर्तृहरेर्मृत्युरभूदिति । तत्सूचनानुसारमेव भर्तृहरिर्गृहस्थसंन्यासोभयाश्रमयोर्मध्ये आन्दोलित इवासीत् । शतकेषु वर्णिता कवेर्मनःस्थितिरेतादृश्येवासीत् । एवं सत्यपि शतकत्रयकर्तृभर्तृहरेर्वैयाकरणेन भर्तृहरिणाऽभेदस्थापनं दृढतया कर्तुं न शक्यम् ।

**९१. भल्लटः २०००**

शङ्करवर्मणः सभाकविः (खी० ८८४-९०२) भल्लटशतकस्य (काव्यमालायाश्चतुर्थगुच्छके प्रकाशितस्य) रचयिता कश्मीरवास्तव्यः ।

**९२. भवदेवः १५५२**

सम्भवतः पट्टनवासिनः कृष्णदेवस्य पुत्रः । खीस्तीयसप्तदशशताब्दीकः ।

**९३. भवभूतिः १०२, ११७, २६९, ९६८, १००२, १६७६, २०११, २०३५, २०४०**

राज्ञो यशोवर्मणः काले ख्रीस्तीयसप्तमशताब्द्याः समाप्तावष्टमशताब्द्याः प्रारम्भे च विद्यमानः। मालतीमाधवस्य, महावीरचरितस्य, उत्तररामचरितस्य च सुप्रसिद्धो रचयिता।

**९४. भानुकरः २५. ७४, ७६, ४६८, १६३२ १६४२, १७४५, १८४८, १९३१, १९४२, १९५०।**

क्वचिद् भानुमिश्रः क्वचिच्च भानुदत्त इत्यप्यस्य कवेर्नामनी लभ्येते। ख्रीस्तीयषोडश-शताब्द्यामुत्पन्नस्य वघेलनृपतेर्वीरभानोरयमाश्रित इत्यवगम्यते। अस्य गिरीशगौरीपतिः कुमारभार्गवीयञ्चेति काव्यद्वयमप्युलभ्यते। रसमञ्जर्या रसतरङ्गिण्याश्च रचयिताऽयमेव।

**९५. भानुषेणः १९४०**

अविदितः। ख्रीस्तीयत्रयोदशशताब्द्या मध्ये तदादौ वोत्पन्नः स्यात्।

**९६. भारविः ६६२, ६७३**

पुलकेशिद्वितीयस्य (ख्री० ६३४) शिलालेखे कविरयं निर्दिष्टः, यत्र रविकीर्त्तेर्यशः कालिदासस्य भारवेश्च यशसोपमितम्।

**९७.. भासः ११३, १६४९**

कालिदासात्पूर्ववर्ती कविभिरनेकैः स्मृतः। त०गणपतिशास्त्रिणा सम्पादितस्य त्रयो-दशसंख्यनाटकचक्रस्य सम्भावितः कर्ता।

**९८. भेरीभाङ्कारः ३, २६, १०१, १२१-१२३, २५१-२५३**

शैवः। इदं कवेरुपनाम भवितुमर्हति। काश्मीरकोऽयं वाराणस्यां निवसति स्म।

**९९ भोजः १४८४**

सिन्धुलस्य तनयः, धारानृपतिः, ख्री० एकदशशताब्दीकः अनेकेषां ग्रन्थानां रचयिता परमारवंशजः।

**१००. मञ्जुघोषः १०२७**

नास्ति विदितः। ख्री०त्रयोदशशताब्द्या मध्यवर्ती, ततोऽपि पूर्वमयं स्यादुत्पन्नः।

**१०१. मदनः ७२, ३१०**

मञ्जुघोषस्येवास्य स्थितिः।

**१०२. मदालसा ५७२**

काचित् कवयित्री। नास्ति विदिता। शार्ङ्गधरपद्धताविमयुद्धृता। अतः ख्री०-चतुर्दशशताब्द्या मध्ये ततोऽपि वा पूर्वमुत्पन्ना स्यात्।

**१०३. मधुरवाणी १८४९**

तन्जीरनायकस्य रघुनाथस्य सभायाः कवयित्री । खी०सप्तदशशताब्दी ।

**१०४. मधुसूदनसरस्वती २६४**

सुप्रसिद्धो दार्शनिकः कविश्च । बङ्गदेशवास्तव्यः । खी०षोडशशताब्दीकः ।

**१०५. माघः ५१४, ८३८, ६४४, ६६७, ९७४**

खी०सप्तमशताब्द्या उत्तरार्धवर्ती शिशुपालवधमहाकाव्यस्य सुप्रसिद्धो रचयिता ।

**१०६. माधवपुरी १८३**

बङ्गदेशीयः शङ्करमतानुगः कविः । खी०पञ्चदशशताब्दीकः । कृष्णदासेन स्वकीये चैतन्यचरितामृते निर्दिष्टः स्तुतश्च ।

**१०७ मारुला १६२९**

सम्भवतः कर्णाटकवास्तव्या काचित् कवयित्री । त्रयोदशशताब्द्या मध्ये ततोऽपि वा पूर्वमुत्पन्ना भवेत् । जल्हणस्य सूक्तिमुक्तावल्यामुद्धृता ।

**१०८. मालतीमाधवः १६७६**

कस्यचित्कवेर्नाम, न तु भवभूतेर्नाटकस्यैकस्येति स्टर्नवाख़महोदयाः । जल्हणस्य सूक्तिमुक्तावल्यां निर्दिष्टत्वात् खी०त्रयोदशशताब्द्या मध्ये ततोऽपि पूर्वमुत्पन्नः स्यात् ।

**१०९. मुराचार्यः १८६१**

मुराचार्य इति कस्यचित्कवेर्नाम नास्ति विदितम् । यद्ययं सुराचार्य इति पठ्येत ततोऽपि न क्वचिल्लभ्यत एतादृशं नामधेयम् ।

**११०. मुरारिः २७, २८, ६४, २८७, ३२३, ८४५, १६३५, १७७२**

सम्भवतः खी०नवमशताब्द्यामुत्पन्नः, भट्टवर्धमानस्य पुत्रः कलचुरिनृपतेः सभाकविः, अनर्घराघवाख्यनाटकस्य प्रणेता ।

**१११. यशोवर्मा २०३९**

यशोवर्मदेव इत्यस्य नाम स्यात् । जल्हणस्य सूक्तिमुक्तावल्यामुल्लेखेनास्य समयः खी० त्रयोदशशताब्द्या मध्ये ततोऽपि वा पूर्वं भवितुमर्हति । नाम्नाऽनेनैव कान्यकुब्जनृपतिरप्यासीत्, यः कश्मीरनृपतिना ललितादित्येन हतः । तस्य समयः खी० अष्टमशताब्द्यासीत् ।

**११२. रघुनाथशिरोमणिः ४२६**

पक्षधरमिश्रस्य वासुदेवसार्वभौमस्य च शिष्यः, महानैयायिकः, खी० पञ्चदशशताब्द्यामुत्पन्नः ।

**११३. रघुनाथोपाध्यायः १८८, १७७५**

ख्री०सप्तदशशताब्द्यां ततोऽपि वा पूर्वमुत्पन्नः कश्चित् कविः।

**११४. रतिरहस्यकृत् १५५३**

रतिरहस्यनाम्नः कामशास्त्रीयग्रन्थस्य रचयिता।

**११५. रत्नभद्रः २००२**

नास्ति विदितः। ख्री०सप्तदशशताब्द्याः पूर्ववर्ती कश्चित् कविः।

**११६. रत्नाकरः १०४५, १७०४**

ख्री०नवमशताब्द्या मध्ये जातः, अवन्तिवर्मणः चित्तपजयापीडस्य च सभाकविः। कश्मीरवास्तव्यः, हरविजयमहाकाव्यस्य कर्ता।

**११७. रविगुप्तः ४०१, ७०७, ७३८, ७५८, ९३१**

नास्ति विदितः। एतन्नामधेयाः कतिचन बौद्ग्रन्थेषु निर्दिष्टाः, परमयं भिन्न एव कश्चित्।

**११८. राघवचैतन्यः २९०**

कविकल्पलताया महागणपतिस्तोत्रस्य च रचयिता। ख्री०चतुर्दशशताब्द्यां ततोऽपि वा पूर्वमुत्पन्नः।

**११९. राजपुत्रविजयपालः १७४७**

नास्ति विदितः।

**१२०. राजशेखरः २३, २८९, ३०७, ३१५, ३३५-३४४, ३७९, ४२१, ४३६-४४५, ४४८, १७३३, १७८५, १८०३, १८१३, १९२६, १९३९, २००७, २०३१।**

ख्री०नवमशताब्द्या अन्ते ख्री०दशमशताब्द्या आरम्भे च समुत्पन्नः, यायावरीयः, अवन्तिसुन्दर्याः पतिः काव्यमीमांसायाः कर्पूरमञ्जरीसट्टकस्य च रचयिता।

**१२१. रामचन्द्रचरणाः ५७, ६२, ८५**

न सन्ति विदिताः।

**१२२. रामजित्पण्डिताः १७१३**

न सन्ति विदिताः।

**१२३. रिल्हुकः ९३२**

नास्ति विदितः। ख्री० एकादशशताब्द्यां ततोऽपि वा पूर्वमुत्पन्नः स्यात्।

१२४. रुदतीब्रह्मन् १६२५

नास्ति विदितः। कवेरिदं नाम किञ्चित् कृत्रिममिव प्रतिभाति। खी०त्रयोदश-शताब्द्यां ततोऽपि वा पूर्वमुत्पन्नः स्यात्। जल्हणस्य सूक्तिमुक्तावल्यामुद्धृतः।

१२५. रुद्रभट्टः ३५५, १७८५, १८११, १८४२।

नास्ति विदितः।

१२६. लक्ष्मणः १२

आङ्कोलकरलक्ष्मणभट्ट इति पूर्णं नाम। खी०सप्तदशशताब्द्याः पूर्वार्द्धवर्ती, पद्य-रचनाख्यस्य सुभाषितसङ्ग्रहस्य रचयिता।

१२७. लक्ष्मणठक्कुरः २०२०

नास्ति विदितः। पद्यरचनायामप्यस्य पद्यमस्ति।

१२८. लक्ष्मीधरः १५१, २१७, १६८७.

चक्रपाणिविजयमहाकाव्यस्य कर्ता, सम्भवतः शार्ङ्गधरस्य भ्राता वङ्गदेशीयः कविः। प्राचीनेषु सुभाषितग्रन्थेषु समुद्धृतः।

१२९. लोष्टसर्व[ज्ञः] ३४६

नास्ति विदितः। जल्हणस्य सूक्तिमुक्तावल्यामुद्धृतः खी०त्रयोदशताब्द्यां ततोऽपि वा पूर्वमुत्पन्नः स्यात्।

१३०. वत्सराजः ४७१

१३१. वराहमिहिरः ४५, ६७१

आदित्यदासस्य पुत्रः, प्रत्यूषसः पिता। सुप्रसिद्धो ज्योतिर्विद्। खी०षष्ठशताब्द्या-मुत्पन्नः। विक्रमादित्यस्य नवसु रत्नेषु परिगणितः।

१३२. वल्लभदेवः ३५६, ३६३, ३६४, ४२३, ५५६, ४६१, ७३४, ७३५, ७३६, ७६०, ९८८

सम्भवत आनन्ददेवस्य पुत्रः, चन्द्रादित्यस्य पिता, कय्यटस्य पितामहः। खी०दशम-शताब्द्यामेकादशशताब्द्यां वोत्पन्नः। मल्लिनाथेनोल्लिखितः। कुमारसम्भवादीना टीकाकारः।

१३३. वाचस्पतिभट्टः ९४३।

नास्ति विदितः। खी०एकादशशताब्द्यां ततोऽपि वा पूर्वमुत्पन्नः। क्षेमेन्द्रेण कवि-कण्ठाभरणे समुद्धृतः।

**१३४. वाणीकण्ठाभरणः १६५३, २०४३**

नास्ति विदितः ।

**१३५. वाणीविलासः १७६६, १७७४**

नास्ति विदितः ।

**१३६. वादीश्वरकाञ्चनः ४७**

नास्ति विदितः ।

**१३७. वाल्मीकिः १७२०**

आदिकविः ।

**१३८. विकटनितम्बा ४४८**

काचित् कवयित्री । इदं कस्याश्चिदपरं नाम भवितुमर्हति । ख्री०नवमशताब्द्याः प्रथमार्धम्, ततोऽपि वा पूर्वं भवितुमर्हति । आनन्दवर्धनादिभिरुल्लिखिता ।

**१३९. विक्रमादित्यः १७५४**

एतन्नामवन्तः कतिपये नृपतयः श्रूयन्ते, परं सुभाषितग्रन्थेषु कस्य निर्देशः कृत इति नैव निश्चेतुं शक्यम् ।

**१४०. विज्जा ३५०, ८३२, १६२५**

एका कवयित्री । विजयाङ्केत्यप्याख्याता । सम्भवतः ख्री०नवमशताब्द्या द्वितीयार्धे समुत्पन्ना चन्द्रादित्यस्य पत्नी पुलकेशिनश्च पुत्रवधूः महिषी विजयभट्टारिका ।

**१४१. विज्ञानेश्वरः १६**

नास्ति विदितः ।

**१४२. विद्यापतिः ४१६**

कर्णनृपतेः सभाकविः । मैथिलविद्यापतेर्भिन्नः ।

**१४३. विशाखदेवः ८७६, १०४१, १६६८**

पृथोः पुत्रः, सामन्तवटेश्वरस्य पुत्रः, पाटलिपुत्रवास्तव्यो बङ्गदेशवास्तव्यो वा । ख्री० अष्टमशताब्द्यां नवमशताब्द्यां वोत्पन्नः । कालिदासस्य समसामयिकत्वेन मतः, ख्री०पञ्चमशताब्दीकः, मुद्राराक्षसाख्यनाटकस्य कर्ता, अभिनवगुप्तादिभिरुद्धृतः ।

**१४४. विष्णुपुरी १६०**

तीरभुक्ति(तिरहुत)जनपदस्याद्वैती संन्यासी। वङ्गदेशस्य भक्त्यान्दोलनस्य प्रवर्तकेष्वेकः। ख्री०चतुर्दशशताब्द्या अन्ते, पञ्चदशशताब्द्याश्चारम्भे समुत्पन्नः।

**१४५. विष्णुशर्मा ५१३, ५२३**

पञ्चतन्त्रस्य लेखकत्वेन प्रसिद्धः कश्चिद् ब्राह्मणः। ख्री०प्रथमशताब्दीको भवितुमर्हति।

**१४६. वीर्यमित्रः १८६२**

पालनृपतेः सभाकविः। शैवः। ख्री०द्वादशशताब्द्याः पूर्वमपि भवितुमर्हति, यतः कतिपयेऽस्य श्लोका ख्री०एकादशताब्द्या अलङ्कारग्रन्थेषु समुद्धृताः सन्ति।

**१४७. वेदगुप्तः २०१३**

केवलमस्य कवेः पद्यमिदं सुभाषितहारावल्यामेव लभ्यते, अतः कविरयं ख्री० सप्तदशशताब्द्यां ततोऽपि वा पूर्वं भवितुमर्हति।

**१४८. वैद्यभानुभट्टः १३५२**

जल्हणस्य सूक्तिमुक्तावल्याः सङ्ग्रहकर्ता, ख्री०त्रयोदशशताब्दीकः।

**१४९. वैद्यवल्लभः १३४**

नास्ति विदितः। केवलमयं प्रस्तुतसुभाषितसङ्ग्रहे लभ्यते। समयोऽप्यस्य ख्री० सप्तदशशतके ततोऽपि वा पूर्वं निश्चेतुं शक्यते।

**१५०. व्यासचरणाः १४५, ९४१**

महाभारतस्य पुराणानां च रचयितारः।

**१५१. शकवृद्धिः १६४८, १६५२, १७२३, १९६०**

नास्ति विदितः। जल्हणस्य सूक्तिमुक्तावल्यामुद्धृतत्वात् ख्री०त्रयोदशशताब्द्यां ततोऽपि वा पूर्ववर्ती स्यात्।

**१५२. शङ्कराचार्यः २१३, २७८, १४६४**

अद्वैतवेदान्तसिद्धान्तस्य सुप्रसिद्धो दार्शनिकः ख्री०अष्टमशतके नवमशतके वोत्पन्नः।

**१५३. शङ्कुकः १९७१**

ख्री०अष्टमशतके नवमशतके वोत्पन्नः कश्चिदालङ्कारिकः, कश्मीराभिजनः। भरत-

रससूत्रस्यान्यतमो व्याख्याता । कश्चिदन्यो मयूरसूनुः मयूरशङ्कर इत्यपि नाम्ना ख्यातः शङ्कुको लभ्यते । सम्भवतो द्वावपीमावभिन्नौ ।

१५४. शार्ङ्गधरः २४, ३०९, १८१०

शार्ङ्गधरपद्धतिनाम्नः सुभाषितसङ्ग्रहस्य कर्ता ख्री०चतुर्दशशतके समुत्पन्नः ।

१५५. शिरोमणिः १८९५, १८९८

ख्री०पञ्चदशशतशब्द्यामुत्पन्नः, नैयायिकः रघुनाथशिरोमणिर्भवितुमर्हति ।

१५६. शिवस्वामी ६६, ४२७, १९१६, १६७०

ख्री०नवमशताब्दीकः, कश्मीरनृपतेरवन्तिवर्मणः सभाकविः, बौद्ध शैवः, कप्फिणाभ्युदयस्य रचयिता ।

१५७. शीलाभट्टारिका १४८५, १८५०

सम्भवतो भोजदेवस्य समाने समये वर्तमाना शीलानाम्नी कवयित्री । ख्री० दशमशताब्दीका ।

१५८. शुचीगोभट्टः ७३४, ७५९

नास्ति विदितः ।

१५९. श्रियङ्करवर्मा ३९८

नास्ति विदितः । सम्भवतः कश्मीरवास्तव्यस्य यशोवर्मापराख्यस्य शङ्करवर्मणोऽभिन्नः । सुभाषितहारावल्यामनेन नाम्ना समुद्धृतं पद्यं सदुक्तिकर्णामृतादौ शङ्करवर्मनाम्नोपलभ्यते ।

१६०. श्रीधरस्वामी १६५

श्रीमद्भागवतपुराणस्य सुप्रसिद्धः टीकाकारः, ख्री०त्रयोदशशताब्दीतः पूर्ववर्ती स्याद् अत्रोद्धृतस्य पद्यस्य रचयिता ।

१६१. श्रीनारायणगुरुचरणाः २२६ ।

सुभाषितहारावल्या रचयितुर्हरिकवेर्गुरव इति स्वयमेव तेन निर्दिष्टम् ।

१६२. श्रीभगवान् १६७

श्रीश्रीचैतन्यदेवः ।

१६३. श्रीहर्षः १९४८

रत्नावल्यादीनां कर्तृतया प्रसिद्धः, सप्तमशताब्दीकः ।

### १६४. श्रुतधररामः ७३३

नास्ति विदितः। जल्हणस्य सूक्तिमुक्तावल्यामुद्धृतत्वात् ख्री०त्रयोदशताब्द्यां ततोऽपि वा पूर्ववर्ती स्यात्।

### १६५. सञ्जयः १८६८

नास्ति विदितः। कश्चित् कृष्णभक्तः। स्टर्नबाखमहोदयाः केनचित् सञ्जयकविशेखर-नाम्ना कविना सञ्जयमिममभिन्न इति सम्भावयन्ति।

### १६६. सरस्वतीकुटुम्बः ५२६

नास्ति विदितः। अस्य दुहित्रा स्वं धाराधिपतेर्भोजस्य समसामयिक इति निर्दिशति, अतः कविरयं ख्री०दशमशताब्दीको भवितुमर्हति। अस्य दुहितुः पद्यं शार्ङ्गधरपद्धती (पं० सं० ५११) उद्धृतमस्ति।

### १६७. सर्वकः १७२

नास्ति विदितः।

### १६८. सर्वानन्दः १७०

नास्ति विदितः। स्टर्नबाखमहाशयाः कवेरस्य केनचित् शतानन्दरूपेण कविनाऽभिन्नत्वं सम्भावयन्ति।

### १६९. सारङ्गः ६६

नास्ति विदितः।

### १७०. सार्वभौमः २१

नास्ति विदितः। कविसार्वभौम इत्याख्यया प्रसिद्धेन कविनाऽप्यस्य भेदो भवितुमर्हति।

### १७१. सुभद्रा ३४८

काचिदविदिता कवयित्री।

### १७२. सुन्दराचार्यः

नास्ति विदितः।

### १७३. सुबन्धुः ३०, ३९२, ७२२, ७२३, ७५७

ख्री० सप्तमशताब्द्यां ततोऽपि वा पूर्वं भवितुमर्हति। वासवदत्तायाः प्रसिद्धो रचयिता।

**१७४. सोमकविः २६३**

नास्ति विदितः । जल्हणस्य सूक्तिमुक्तावल्यामुद्धृतः ।

**१७५. सोमजिन्द्भट्टः २४३, २७६, २८०**

नास्ति विदितः ।

**१७६. सोमेश्वरभट्टः १७११**

नास्ति विदितः । कश्चित् सोमेश्वरनामा सुरथोत्सवस्य कर्ता ख्री०त्रयोदशशताब्दीको भवितुमर्हति ।

**१७७. हनूमान् ५-६, ३८-४४, ५१, ५२, ५८, १४२, १५४**

महानाटकस्य हनुमन्नाटकस्य वा कर्तृत्वेन प्रसिद्धः । ख्री०नवमशतके लिखितेष्वलङ्कारग्रन्थेष्वस्य पद्यानि लभ्यन्ते ।

**१७८. हरिकविः १, २, २२, ३३-३६, ५३, ५९, ७६, ६८, १८२, १९७, २२८, २६७, २६८, ३२८, ३३३, ३६७, ३८३, ४०५-६, ४५०-५२, ४७६, ५०६, ५१०, ७४२, १००७, १०५६, १४४५, १५८६, १८६३**

प्रस्तुतस्य सुभाषितग्रन्थस्य रचयिता । द्र० भूमिका ।

**१७९, हरिहरः ६७, ३६२, ३६८, ३६९, १६३८**

नास्ति विदितः ।

**१८०. हरिहरभट्टः ८२**

हरिहरादभिन्नः स्यात् । नास्ति विदितः ।



# सुभाषितहारावलीस्थपद्यानुक्रमणी

## शुद्धिपत्रम्

| पद्यसंख्या | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १ | उच्च्चै° | उच्चै° |
| ३ | ४ | त्रलोक्या° | त्रैलोक्या° |
| ५ | ४ | °वपुधा | °वपुषा |
| १९ | १ | चूडात्तंसित° | चूडोत्तंसित° |
| २६ | ३ | °स्तण्डवानि | °स्ताण्डवानि |
| ३३ | १ | त्रलोक्य | त्रैलोक्य° |
| ३५ | २ | फुल्लत्करवदामकामलालता | फुल्लत्कैरवादा-मकामललिता |
| ४१ | ३ | नाल तिद्धि° | नालति द्धि° |
| ४४ | २ | रुद्धरमीभिः | रुद्धैरमीभिः |
| ९३ | १ | श्रितमधितिना | श्रितमधिपतिना |
| ९४ | १ | सहस्राक्षैर्नङ्गैभसि | सहस्राक्षैरङ्गैर्नभसि |
| ९६ | ३ | यस्यक° | यस्यैक° |
| १०७ | १ | मुषाब्ज° | मुखाब्ज° |
| १०८ | १ | परत | परतः |
| १५७ | १ | दुरतानि | दुरितानि |
| १६७ | १ | मुदमर्दनः | मुरमर्दनः |
| २५० | ३ | जनुह् | जह्नु° |
| २९२ | ३ | मृ°ग° | मृग° |
| ३०९ | २ | °स्ननैः | °स्नानैः |
| ३१५ | ३ | कायव्मनु | काव्यमनु |
| ३१९ | २ | लधिमनि | लघिमनि |
| ३२६ | ३ | °माधुरी भाग्य° | °माधुरीभाग्य° |
| ३२८ | ४ | °ज्योतिः कणो | °ज्योतिःकणो |
| ३४६ | ३ | (क्रांते) | (क्राते) |

| पद्यसंख्या | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३४७ | १ | विघ्नतो | विघ्नितो° |
| ३४८ | १ | पार्थस्यं | पार्थस्य |
| ३६७ | ३ | °रत्यर्थैर्ल° | °रत्यर्थैर्ल° |
| ४१० | २ | विदिलतो° | विद्लितो° |
| ४२५ | २ | °नियति | °नियति° |
| ४२५ | ३ | अविर्भावं | आविर्भावं |
| ४२७ | ३ | °प्रायाद् | °प्रायान् |
| ४३१ | १ | यथेव | यद्देयं |
| ४५२ | १ | °वाणी हृदि···वाणी | °वाणीर्हृदि···वाणीः |
| ५०४ | ४ | पाहण° | पाहाण° |
| ५१४ | २ | र्वाचरितैः | पूर्वाचरितैः |
| ५२६ | ३ | °रेव कर्त्तव्यः | °रेव स कर्तव्यः |
| ५२६ | ३ | सन्ता | सन्तो |
| ५५८ | १ | शौर्ये व | शौर्ये च |
| ५६६ | ३ | यातुर्भर्तरि | या तु भर्तरि |
| ६२५ | ४ | त्यागत्स्गं | त्यागात्स्वर्गं |
| ६३२ | २ | कीटि° | कीट° |
| ६४१ | ४ | वितृष्णाता | वितृष्णता |
| ६७८ | ४ | जावति | जीवति |
| ६६८ | ४ | घ्नान्ति | घ्नन्ति |
| ७४२ | ४ | वैयात्यम् | वैजात्यम् |
| ७५२ | ३ | °पूरणाय | °पूरणाय |
| ७८५ | १ | व्यर्धिवित्त° | व्याधिर्वित्त |
| ८४८ | ३ | विनैवक्षरैः | विनैवाक्षरैः |
| ८५८ | ४ | र्मा(म) | र्मा(मा) |
| ८६१ | १ | जति | जाति° |
| ८६३ | १ | °मघुर° | °मधुर° |

| पद्यसंख्या | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८७५ | ३ | यस्य तृण° | ('अत्र छन्दोभङ्गः कवि-नैव कृतः प्रतिभाति' सं०) |
| ८७६ | ४ | °प्रसरे च | °प्रसरेव |
| ८९४ | २ | यन्ति | यान्ति |
| ९०० | ४ | सृष्टा | सृष्टाः |
| ९१४ | २ | °शू ये | °शून्ये |
| ९२३ | २ | °रजो विन्दु° | °रजोबिन्दु° |
| ९३० | १ | °भुष्टेः | °मुष्टेः |
| ९४९ | १ | कुलीनस्यं | कुलीनस्य |
| ९६३ | १ | गुणमणे | गुणगणे |
| १००३ | ४ | किमिहि | किमिह |
| १००६ | ४ | भाभि | भाति |
| ११०५ | २ | यत्कृतः पण्डितेव | यत्नतः पण्डितेन |
| ११८ | १ | °मित्रकर्मणे | °मित्रकर्मणि |
| १२१५ | ४ | °गुरू° | °गुरु° |
| १२२० | १ | °प्रति° | °प्रवि° |
| १२३६ | ४ | दुर्लभः | दुर्लभाः |
| १२४२ | ३ | °विपर्याद् | °विपर्ययात् |
| १२७७ | ३ | नयजा° | नयना° |
| १३३४ | १ | सुलभाः | सुलभा |
| १३६६ | १ | °सान्धाने | °सन्धाने |
| १३७२ | १ | भावनी या | भावनीया |
| १४०६ | ३ | °पालीमला° | °तालीफला°(?) |
| १४०७ | १ | उन्न° | उन्ना° |
| १४४६ | ३ | जठराग्निः | जाठराग्निः |
| १६३३ | ३ | देहर्द्धेन | देहार्द्धेन |
| १६५९ | ३ | इत्यालोच्य | इत्यालोच्य |
| १६९९ | ४ | °वलीषविमं | °वलीविषमं |

| पद्यसंख्या | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७१८ | ४ | नाभेररधः | नाभेरधः |
| १७२० | ३ | सखीर्या° | सखीभिर्या |
| १७२१ | ४ | तस्यां: | तस्याः |
| १७८३ | २ | °यति मपि यत् | °यति यत् |
| १८२४ | ४ | द्वध° | द्वैध° |
| १८२६ | २ | °मात्मद्वत° | °मात्मद्वैत° |
| १८७० | ४ | पत्युर्गृहान् | पत्युर्गृहान् |
| १९०४ | २ | °न्तनिखा° | °न्तर्निखा° |
| १९०७ | २ | झिझटिति | झटिति |
| १९६५ | ३ | ननु° | तनु° |
| १९६६ | ३ | हसः | हंसः |
| १९७० | ३ | [यन] | [यना] |
| १९७२ | ३ | लघु° | मधु° |
| १९८३ | ४ | (त) | (ति) |
| १९८५ | ३ | स्वार्भानुं | स्वर्भानुं |
| १८९२ | २ | °मानङ्ग्या | °मानाङ्ग्या |
| २००८ | ३ | क्षणक° | क्षणैक° |

